# वृत्तरत्नाकरम् ।

श्रीकेदारभट्टविरचितम् ।

कलिकाता-संस्कृत-विद्यामन्दिराध्यक्ष श्रीतारानाथ
तर्कवाचस्पति-भट्टाचार्य्यकृत
विवृति सहितम् ।

तथा ।



# छन्दोमञ्जरी ।

श्रीगङ्गादास-पण्डित-विरचिता ।

वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचितया व्याख्यया समलङ्कृता ।

---

तेनैव संस्कृतम् ।

---

पञ्चम संस्करणम्

---

कलिकातानगरे

नारायण यन्त्रे मुद्रितम् ।

---

इं १८९३ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDIT JIBANANDA VIDYASAGARA B. A.

Superintendent Free Sanskrit College, Calcutta.

# वृत्तरत्नाकरम् ।

## प्रथमोऽध्यायः ।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्चितम् ।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥
वेदार्थशैवशास्त्रज्ञः पाव्येकोऽभूद्‌द्विजोत्तमः ।
तस्य पुत्रोऽस्ति केदारः शिवपादार्चने रतः ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ।
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ कलापकम् ।
पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा ।
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥
षड़ध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्‌त्रिंशदधिकं शतम् ॥
म्यरस्तजभ्नगै(१)र्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥
सर्वगुर्मो मुखान्तर्लौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः (२)

---

(१) अत्र असन्देहाय न णत्वभावः । एवमन्यत्रापि ।

(२) त्रीणि अक्षराणि परिमाणमेषां कन् । त्रिवर्णात्मकाः मादयः अष्टौ गणा इत्यर्थः । तेषां देवताफलादीन्यन्यत्रोक्तानि ।

मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाश, मनिलो देशाटनं सोऽन्त्यगः ।

तौ व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यजो,
भश्चन्द्रो यश उज्ज्वलं मुखगुरु, र्नोनाक आयुस्थिलः ॥
एषां मित्रादिसंज्ञाप्यभिहिता शास्त्रकारैः
मनौ मित्रे भयौ भृत्यावुदासीनौ जरौ स्मृतौ ।
तसावरी नीचसंज्ञौ द्वौ द्वावेतौ मनीषिभिः ॥
एतेषामाद्यद्वितीययोः सन्निवेशे फलमुक्तमाकरे
मित्रान्मित्रं विधत्ते प्रचुरधन, मयो मित्रतो भृत्यसंज्ञः
स्थैर्यं, मित्रादुदासो न किमपि च फलं, मित्रतः शत्रुसंज्ञः ।
बन्धोः पीड़ा, मयो स्याद् यदि खलु नियतं भृत्यतो मित्रसंज्ञः
सर्वं कार्यञ्च, भृत्यात् भृत्यगण इह चेदायतिं सर्वलोके ॥
भृत्याच्चेत् स्यादुदासो धनविगम, मयो भृत्यतः शत्रुसंज्ञः
शोकं कुर्य्यादुदासात् यदि भवति तदा मित्रसंज्ञोऽल्पकार्य्यम्, ॥
तस्माद् भृत्यः प्रभुत्वं, तत इह सततं स्यादुदासो विनाशम्,
तस्माच्छत्रुः स्ववैरं विविधसुखहरं सर्वसत्कारनाशम् ॥
शत्रोर्मित्रञ्च शून्यं, यदि भवति, ततो भृत्यसंज्ञो गृहिण्या
नाशं, तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम् ।
शत्रोः शत्रुर्भवेच्चेदिह खलु नितरां नायकस्येव नाशं,
देशोद्वासं विधत्ते, कथयति च फलं पिङ्गलो नागराजः ॥
गणप्रसङ्गेनाक्षरशुद्धिरप्यभिधीयते "अक्षरे परिशुद्धे तु नायको भूतिमृच्छति" इत्युक्तेरक्षरशुद्धेरावश्यकत्वात् ।
अवर्णात् सम्पत्तिर्भवति, च मुदिवर्णाङ्गनशता-
न्युवर्णादख्यातिः, सरभसम्वर्णात् वरहितात् ।
तथा ह्यचः सौख्यं, ङञणरहितादक्षरगणात्
पदादाविन्यासात् भरवहलपूर्वैर्विरहितात् ॥

भरवहलास्तत्पूर्वाणि यान्यक्षराणि तैर्विरहितादित्यर्थः । हल्वर्णानां फलान्युक्तान्याकरे ।

कः खो गो घश्च लक्ष्मीं वितरति, वियशो ङ, स्तथा च, सुखं, छः
प्रीतिं, जो मित्रलाभं, भयमरणकरौ झञो, टठौ खेददुःखे ।
डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तस्तु खं, थस्तु युद्धं,

इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम्।
लक्षणं सर्व्ववृत्तानां मात्रावृत्तानुपूर्वकम्॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रथमोऽध्यायः।

---

## द्वितीयोऽध्यायः।

लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः।
षष्ठोऽयं न लघू वा प्रथमेऽर्द्धे नियतमार्य्यायाः (१)॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।
पथ्येति (२) नाम तस्याः प्रकीर्त्तितं नागराजेन॥
उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।

---

(१) आर्य्यायाः प्रथमेऽर्द्धे एतत् नियतं लक्ष्म चिह्नं भवति, किं तदाह,— गोपेताः अन्ते मात्राद्वयसहिताः सप्त चतुष्कलात्मका गणाः त्रिंशन्मात्रा इत्यर्थः। इह छन्दसि विषमे प्रथमतृतीयपञ्चमसप्तमरूपे स्थाने जगणो न भवति। षष्ठो गणस्तु अयं जगणात्मकः नलघू वा चतुर्लघुरूपे वा भवेत्। तत्र यतिनियममाह, षष्ठे न्ले नलघुरूपे सति द्वितीयलात् द्वितीयलघोः पूर्व्वमिति शेषः। सयतिपदनियमः यतिसहितं पदं समाप्यमित्यर्थः। परके षष्ठापेक्षया परस्मिन् सप्तमे न्ले नलघुरूपे मुखलात् आद्यलघोः पूर्व्वं षष्ठगणान्ते इति यावत् सयतिपदनियमः। चरमेऽर्द्धे पुनः पञ्चमके न्ले सति तस्मात् मुखलात् आद्यलघोः पूर्व्वं चतुर्थगणान्ते इत्यर्थः। सयतिपदनियमः इह उत्तरार्द्धे षष्ठो गणः लघुरूप एव तेन मात्रात्रयहीनाः पूर्व्वार्द्धलक्षणरूपाः त्रिंशन्मात्राः। एतद्भिन्नस्य नियमो नास्ति यथेच्छं गणादिसन्निवेशनं कार्य्यमित्यर्थः।

(२) यस्याः आर्य्यायाः पादः दलयोः उभयार्द्धयोः आद्येषु त्रिषु अंशकेषु गणेषु द्वादशमात्रात्मको दृश्यते, तस्याः पथ्येति नाम।

यस्यास्तां पिङ्गलनागो विपुला३मिति समाख्याति ॥
उभयार्द्धयोर्जकारौ द्वितीयतुर्य्यौ गमध्यगौ यस्याः ।
चपले४ति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥
आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वलक्ष्मा मुखचपला५ सोदिता मुनिना ॥
प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे तु चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ६ ॥

इत्यार्य्याप्रकरणम् ।

आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीति१ङ्गीतवान् भुजङ्गेशः ॥
आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत् स्यात् ।
यद्युभयोरपि दलयोरुपगीतिं २ तां मुनिर्ब्रूते ॥
आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः ।
सोद्गीतिः ३ किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥
आर्य्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ।
इतरत्तद्वन्निखिलं यदीयमुदितेयमार्य्यागीतिः ४ ॥

इति गीतिप्रकरणम् ।

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र पराश्रिता कला वैतालीये१ऽन्ते रलौ गुरुः (१) ॥

---

(१) विषमे प्रथमे तृतीये च पादे षट् मात्राः, समे द्वितीये चतुर्थे च पादे अष्टौ मात्राः, ताश्च षट् अष्टौ वा नो निरन्तराः निरन्तरलघुरूपा निरन्तरगुरुरूपा वा न भवन्ति अत्र च षट्सु अष्टसु कलासु मध्ये सर्वत्र समा कला द्वितीया चतुर्थी षष्ठी च कला पराश्रिता तृतीयाद्याश्रिता न कार्य्या, तथा च द्वितीयतृतीयकलयोर्योगेन गुरुर्न कार्य्यः, एवं चतुर्थीपञ्चम्योः, षष्ठीसप्तम्योश्च । सर्वत्र चरणेषु अन्ते चरमे रलौ गुरुश्च ।

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः (१) ॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको त्वृजुः(२) ॥
पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः ॥
इदमस्योदाहरणम्—

---

दो, धः, सौख्यं, मुदं, नः, सुखभयमरणक्लेशदुःखं पवर्गः ॥
यो लक्ष्मीं, रस्तु दाहं, व्यसनमथ लवौ शः सुखं, षस्तु खेदं,
सः सौख्यं, हस्तु खेदं, विलयमपि च लः, चः समृद्धिं करोति ।
संयुक्तं चेह न स्यात् सुखमरणपटुर्वर्णविन्यासयोगः
पद्यादौ, गद्यवक्त्रे, वचसि च सकले, प्राकृतादौ समोऽयम् ॥
एतेषां फलाधारनिरूपणमप्याकरे

नायको वर्ण्यते यत्र फलं तस्य समादिशेत् ।
अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम् ॥

तस्य प्रतिप्रसवोऽप्युक्तः ।

देवता वर्ण्यते यत्र क्वापि काव्ये कवीश्वरैः ।
मित्रामित्रविचारो वा न तत्र फलकल्पना ॥
देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥

(१) सर्वगुरुः अन्तगुरुः मध्यगुरुः आदिगुरुः चतुर्लघुश्चतुष्कलाः चतुर्मात्राः पञ्च गणाः आर्य्यादिषु मात्रावृत्तेषु ।

(२) युक्तः संयुक्तवर्णः परो यस्मात् सः गुरुर्भवेत् पादान्ते गद्यचतुर्थभागावसाने वा विकल्पेन लघुरिति शेषः गुरुर्भवेदित्यनुषङ्गः तु पुनरसौ ग् इत्यभिधीयते तद्रूपाङ्करेखायाः वक्रत्वात् सोऽपि वक्रः । अन्यः उक्तरूपाद्भिन्नो वर्णो मात्रिकः मात्रामितकालीन उच्चार्य्यत्वात् ल् इति तद्रूपाङ्करेखायाः सरलत्वात् ऋजुरवक्र इति चोच्यते ।

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ॥
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति (१) ॥
अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थोऽंशो यतिर्विच्छेदसंज्ञितः ॥
युक् समं विषमं चायुक् स्थानं सद्भिर्निगद्यते ।
सममर्द्धसमं वृत्तं विषमं च तथापरम् ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥
आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्द्धितैः ।
पृथक् छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम् ॥
तदूर्द्धं चण्डवृष्ट्यादिदण्डकाः परिकीर्त्तिताः ।
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥
उक्ता१ त्युक्ता२ तथा मध्या ३ प्रतिष्ठा४न्या सुपूर्विका५ ।
गायत्र्यु६ष्णि७गनुष्टुप्८ च बृहती९ पङ्क्ति१०रेव च ॥
त्रिष्टुप्११ च जगती१२ चैव तथातिजगती१३ मता ।
शक्करी१४ साऽतिपूर्वा१५ स्यादष्य१६ त्यष्टी१७ ततः स्मृते ॥
धृति१८श्चातिधृति१९श्चैव कृतिः२०प्रकृति२१राकृतिः ॥२२॥
विकृतिः२३ सङ्कृति२४श्चैव तथातिकृति२५रुत्कृतिः ॥२६॥

---

(१) ग्राम्येति। चतुर्थचरणादिस्थसंयुक्तवर्णात् ग्रेत्यस्मात् पूर्वस्य रीत्यस्य लघुत्वं तेन न आर्य्यायास्तृतीयचरणे द्वादशमात्रताक्षतिः।

पर्य्यन्ते र्यौ (१) तथैव शेषमौपच्छन्दसिकं२ सुधीभिरुक्तम् ।
आपातलिका३ कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥
तृतीययुग्दक्षिणान्तिका ४ समस्तपादेषु द्वितीयलं (२) ।
उदीच्यवृत्ति५र्द्वितीयलः सक्तोऽग्रेण (३) भवेदयुग्मयोः ॥
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्ति६रुदितेति युग्मयोः (४) ।
यदा समावोजयुग्मकौ (५) पूर्वयोर्भवति तत्प्रवृत्तकम् ७ ॥
अस्य युग्मरचिता (६) परान्तिका ८ ।
अयुग्भवा (७) चारुहासिनी ९ ।

इति वैतालीयप्रकरणम् ।

वक्त्रं १ नाद्यान्नसौ(८)स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।

---

(१) दलयोः पर्य्यन्ते षसाम् अष्टानां वा कलानामन्ते शेषे र्यौ रगण-यगणौ स्यातां चेत् शेषं तथैव प्राग्वत् तदा औपच्छन्दसिकं नाम छन्दः ।

(२) समस्तपादेषु द्वितीयलः यदि तृतीययुक् द्वितीयमात्रातृतीयमात्राभ्यामेको गुरुश्चेत् शेषं पूर्ववत्, तदा दक्षिणान्तिका नाम छन्दः ।

(३) अयुग्मयोः प्रथमतृतीयपादयोर्यदि द्वितीयलः द्वितीयलघुः अग्रेण तृतीयलघुना सक्तः संयुक्तः, शेषं-पूर्ववत्, तदा उदीच्यवृत्तिर्नाम छन्दः ।

(४) युग्मयोः द्वितीयचतुर्थयोः पादयोः पञ्चमः लघुः पूर्वेण चतुर्थकलया युतः चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत्, तदा प्राच्यवृत्तिः नाम छन्दः ।

(५) यदा ओजयुग्मौ विषमसमपादौ पूर्वयोरुक्तयोः उदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ स्यातां, तथा च प्रथमतृतीयपादयोर्द्वितीयतृतीयमात्रयोर्योगेन गुरुश्चेत्, द्वितीयचतुर्थपादयोश्च चतुर्थीपञ्चम्योर्योगेन गुरुश्चेत् तदा तत् प्रवृत्तकं नाम छन्दः ।

(६) अस्य प्रवृत्तकस्य युग्मपादेन द्वितीयपादलक्षणेन सकलपादेषु रचिता चेत्, अपरान्तिका नाम छन्दः ।

(७) अस्यैव अयुजा विषमपादलक्षणेन सकलपादेषु रचिता चेत्, चारुहासिनी नाम छन्दः ।

(८) आद्यादक्षरात् नसौ नगण सगणौ न स्याताम्, अब्धेश्चतुर्थाक्षरात् यगणः

युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं २ प्रकीर्त्तितम् (१) ॥
(२) ओजयोर्जेन वारिधेस्तदेव विपरीतादि ३ ।
चपलावक्त्र४मयुजोर्नकारश्चेत् पयोराशेः ॥
यस्यां लः (३) सप्तमो युग्मे सा युग्मविपुला ५ मता ।
(४) सैतवस्याखिलेष्वपि । भेनाब्धितो (५)भाद्विपुला ६ ।
इत्थमन्या ७ रश्चतुर्थात् (६) । नोऽम्बुधेश्चेन्न विपुला ॥
(७) तोऽब्धेस्तत्पूर्वान्या ८ भवेत् ।

इति वक्त्रप्रकरणम् ।

द्विगुणितवसुलघुरचलधृति१रिह ।
(८) मात्रासमकं २ नवमो ल् गोऽन्त्यः

---

स्यात्, तदतिरिक्तवर्णाः यथेच्छं स्युः तदा अनुष्टुभि अष्टाक्षरपादके छन्दसि वक्त्रं नाम छन्दः ।

(१) अस्य भेदानाह, युजोर्द्वितीयचतुर्थपादयोः सरिद्भर्त्तुर्वारिधेः चतुर्थाक्षरादूर्द्ध्वं जेन जगणेनोपलक्षितं चेत् पथ्यावक्त्रं नाम छन्दः ।

(२) ओजयोर्विषमयोश्चेत् चतुर्थाक्षरात् जेनोपलक्षितं विपरीतादिविपरीतपथ्यावक्त्रं नाम छन्दः ।

(३) युग्मे द्वितीये चतुर्थे च पादे यस्याः सप्तमो वर्णः लः लघुः, सा युग्मविपुला नाम छन्दः ।

(४) अखिलेषु पादेषु सप्तमो वर्णो लघुश्चेत् सैतवस्य आचार्यस्य मते विपुला नाम छन्दः ।

(५) अब्धेश्चतुर्थाक्षरात् भेन रचिता भविपुला नाम छन्दः ।

(६) इत्थं चतुर्थाक्षरात्, परं रश्चेत् अन्या रविपुला नाम छन्दः ।

(७) अम्बुधेश्चतुर्थाक्षरात् तगणश्चेत् तपूर्वा, तविपुला नाम छन्दः ।

(८) सर्वेषां षोड़शमात्रात्मकत्वात् मात्रासमत्वमेषाम् यत्र षोड़शमात्राक्षरस्य नवमो ल् लघुः अन्त्यो गः, ताभ्यां शेषेष्वनियमः, तत् मात्रासमकं नाम छन्दः ।

(१) जोल्नावथाम्बुधेर्विश्लोकः ३ ।
तद्युगलाद्वा (२) नवासिका ४ स्यात् ।
वाणाष्टनवसु यदि लश्चित्रा ५
(३) उपचित्रा ६ नवमे परयुक्ते ।
यदतीतकृतविविधलक्ष्मयुतैः (४)
मात्रासमादिपादैः कलितम् ॥
अनियतवृत्तपरिमाणसहितम् ।
प्रथितं जगत्सु पादाकुलकम् ७ ॥
वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ।
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् (५) ॥

इति मात्रासमप्रकरणम् ।

---

(१) अम्बुधेश्चतुर्थलघोरूर्द्ध जौ मध्यगुरुः न्लौ नगणलघू वा स्यातां, तथा च गुरुमध्या लघुरूपा वा चतस्रो मात्राः स्युः, स विश्लोको नाम छन्दः ।

(२) तद्युगलात् अम्बुधिद्वयात् अष्टमात्रातः इत्यर्थः । यदि जः न्लौ वा इत्यनुषङ्गः । सा नवासिका नाम छन्दः ।

(३) नवमे लघौ परेण दशमेन संयुक्ते ताभ्यामेकस्मिन् गुरौ सति उपचित्रा नाम छन्दः ।

(४) अतीतानां मात्रासमादीनां कृतानि विविधानि यानि लक्ष्माणि लक्षणानि तैर्युतैः मात्रासमादिपादैः कलितं यत् वृत्तम् अनियतं वृत्तं वृत्तलक्षणं यत्र तादृशं सत् परिमाणेन षोड़शमात्रामानेन सहितं जगत्सु प्रथितम् पादाकुलकं नाम ।

(५) इदानीं मात्रावर्णसंख्याज्ञाने लघुगुरुसंख्याज्ञानार्थं गुरुलघुनिश्चये वर्णसंख्याज्ञानार्थञ्चाह । वृत्तस्य लाः मात्राः तत्संख्याः वर्णैः वर्णसंख्यया विना गाः गुरवस्तत्संख्याः ज्ञेयाः अयमर्थः । यत्र वृत्तस्य मात्रावर्णयोः संख्या ज्ञाता गुरुलघुसंख्या तु न ज्ञाता तत्र मात्रासंख्यातो वर्णसंख्यामपनीय शिष्टा गुरुसंख्या

त्रिखिगुणितदशलघुरचितमप-
गतलघुयुगलमपरमिदमखिलम् (१)।
सगुरु शकलयुगलकमपि
सुपरिघटितललितपदविततिं भवति शिखा १॥
विनिमयविनिहितशकलयुगल-
कलितपदविततिविरचितगुणनिचया।
श्रुतिसुखकृदियमपि जगति
जि(२)जशिर उपगतवति सति भवति खजा २॥
अष्टावर्द्धे(३)गा द्व्यभ्यस्ता यस्याः सानङ्गक्रीडोक्ता
दलमपरमपि वसुगुणितसलिलनिधि-
लघुकविरचितपदविततिं भवति॥

---

भवति। एवं ज्ञातगुरुसंख्यातः वर्णसंख्यामपनीय लघुसंख्या भवति। यदि तु मात्राणां गुरूणां च संख्या ज्ञाता वर्णस्य संख्या न ज्ञाता तज्ज्ञानायाह। वर्णा इति वृत्तस्य लाः मात्रास्तत्संख्याः गुरुभिस्तत्संख्यया विना वर्णाः वर्णसंख्याः ज्ञेयाः। लघुसंख्याज्ञाने गुरुसंख्याज्ञानायाह। गुरव इति। वृत्तस्य वर्णसंख्याः लैर्लघुभिः तत्संख्यया विना दले गुरवः तत्संख्याः भवन्ति। इति इत्थमेव गुरु-लघुसंख्याज्ञाने निश्चितमव्यभिचरितं नियतं प्रमाणम्।

मात्राप्रसङ्गात् द्विशकलान्याह

(१) त्रिखिभिस्त्रिभिर्गुणिता दश लघवस्तैः त्रिंशल्लघुभिरित्यर्थः। रचितम् अपगतं लघुयुगलं यस्मात् तत् अष्टाविंशतिलघुकमित्यर्थः एवम् आद्यखण्डमित्येवं रूपम् अपरं द्वितीयं शकलमखिलं सम्पूर्णलघुरूपमित्यर्थः। अन्ते गुरुवर्णेन सहितं शकलयुगलं खण्डद्वयं यस्य तथाभूतं शिखा नाम छन्दः।

(२) जि जशिरः उपगतवति सति खजा खञ्जा नाम छन्दः।

(३) यस्याः अर्द्धे खण्डे द्व्यभ्यस्ता द्वाभ्यामभ्यस्ताः गुणिताः अष्टौ गा गुरवः सा अनङ्गक्रीड़ा नाम छन्दः।

त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगलकृततनुरतिरुचिरा४ ॥
इति वृत्तरत्नाकराख्ये छन्दसि सममात्राख्यो
द्वितीयोऽध्यायः।

---

## तृतीयोऽध्यायः।

१। उक्तायाम् २।
ग् श्रीः १
२। अत्युक्तायाम् ।४।
गौ स्त्री १।
३। मध्यायाम् ८।
मो नारी १
रो मृगी २

---

४। प्रतिष्ठायाम् १६
म्गौ चेत् कन्या १।

---

५। सुप्रतिष्ठायाम् ३२
भ्गौ गिति पङ्क्तिः १

---

६। गायत्र्याम् ६४।
त्यौ चेत्तनुमध्या १
शशिवदना२न्यौ।

विद्युल्लेखा३मोमः ।
स्रौ चेत् वसुमती४ ।

---

७ । उष्णिहि । १२८
म्सौ गः स्यान्मदलेखा१ ।
भरगैर्हंसमाला२
ननगि मधुमती३ ।
कुमारललिता४ ज्स्गाः ।

---

८ । अनुष्टुभि २५६
भौ गिति चित्रपदा१ गः ।
मो मो गो गो विद्यु(ल्लेखा)न्माला२ ।
माणवकं ३ भात्तलगाः ।
न्नौ गौ हंसरुत४मेतत् ।
जौ समानिका५गलौ च ।
प्रमाणिका६जरौ लगौ ।
वितान७माभ्यां यदन्यत्(१) ।

---

९ । अथ वृहत्याम् ५१२ ।
रान्नसाविह हलमुखी१ ।
भुजगशिशुसृता(युता)२नौमः
भद्रिका३भवति रौ नरौ ।

---

१० । अथ पङ्क्तौ १०२४
म्सौ ज्गौ शुद्धविराड़्१ दं मतम् ।

(१) नाराचकाप्तरा ल गौ । परिशिष्टम् ।

म्नौ य्गौ चेति पणवनाम२दम्।
जौ रगौ मयूरसारिणी३स्यात्।
भ्मौ सगयुक्तौ (चम्पकमाला) रुक्मवतीयम्४।
ज्ञेया मत्ता५मभसगयुक्ता।
नरजगैर्भवेन्मनोरमा६।
तौजौ गुरुणेयमुपस्थिता७। (१)

---

११। त्रिष्टुभि २०४८।

स्यादिन्द्रवज्रा१ यदि तौ जगौ गः।
उपेन्द्रवज्रा२जतजास्ततो गौ।
अनन्तरोदीरितलक्ष्मभाजौ
पादौ(२)यदीयावुपजातय३स्ताः।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम।
न जजलगैर्गदिता सुमुखी४।
दोधक५वृत्तमिदं भभभाद्गौ॥
शालिन्युक्ता६म्तौ तगौ गोऽब्धिलोकैः।
वातोर्मी७यं कथिता म्भौ तगौ गः॥
म्भौ न्लौ गः स्याद् भ्रमरविलसितम्६।
वाणरसैः स्याद् भतनगगैः श्रीः७॥

---

(१) दीपकमाला म्भौ मता जगौ।

ज्ञेया हंसी८मभनगयुता। परिशिष्टम्।

(२) यदीयौ पादौ यथा कथञ्चित् द्वौ पादौ इन्द्रवज्रोपेन्द्रवज्रपादलक्ष्मयुक्तौ ता उपजातयः तथा च वक्ष्यमाणानुसारेण चतुःसंख्याप्रस्तारे षोड़शसु भेदेषु शुद्धमिन्द्रवज्रामुपेन्द्रवज्रां च हित्वा चतुर्दशसु भेदेषु शिष्टेषु अर्द्धसमवृत्तभेदोक्तामाख्यानकीं विपरीतपूर्वाञ्च हित्वा द्वादश भेदाः भवन्ति अतस्ता इत्युक्तम्।

रान्नराविह रथोद्धता८लगौ ।
स्वागतेति९रनभाद्गुरुयुग्मम् ॥
ननसगगुरुचिता वृत्ता१० ।
ननरलगुरुभिश्च भद्रिका११ ॥
मौक्तिकमाला१२ यदि भतनाद् गौ ।
उपस्थित१३मिदं ज्सौ ताद् गकारौ ॥
उपचित्र१४मिदं सससाल्लगौ ।
कुपुरुषजनिता१५ननौ र्गौ गः ॥
अनवसिता१६न्यौ भ्गौ गुरुरन्ते (१) ।

---

१२ । अथ जगत्याम् । ४०९६
चन्द्रवर्त्म १निगदन्ति रनभसैः ।
जतौ तु वंशस्थ२मुदीरितं जरौ ॥
स्यादिन्द्रवंशा३ततजै रसंयुता ।
इह तोटक४मम्बुधिसैः प्रथितम् ॥
द्रुतविलम्बित५माह नभौ भरौ ।
वसुयुगविरतिर्नौ म्यौ पुटो६ऽयम् ॥
प्रमुदितवदना७भवेन्नौ च रौ (२) ।
नयसहितौ न्यौ कुसुमविचित्रा८ ॥

---

(१) श्येनिका१७रजौ रलौ गुरुर्यदा ।
विध्वङ्कमाला१८भवेत्तौ तगौ गः ।
सान्द्रपदं१९स्याद्भतनगलैश्च ।
शिखण्डितमिदं ज्सौ त्नौ गुरुश्चेत् । परिशिष्टम् ।

(२) वसुयुगविरतिर्ननौ रौ प्रभेति मल्लिनाथसम्मतम् । नगुगरयुगयुग् गौरी मतेति कौमुदीकारमतम् ।

रसैर्जसजसा जलोद्धतगतिः९ ।
भुजङ्गप्रयातं१०भवेद्यैश्चतुर्भिः ॥
रैश्चतुर्भिर्युता स्रग्विणी११सम्मता ।
भुवि भवेन्नभजरैः प्रियंवदा१२ ॥
त्यौ त्यौ मणिमाला१३छिन्ना गुहवक्त्रैः ।
धीरैरभाणि ललिता१४तभौ जरौ ॥
प्रमिताक्षरा१५सजससैरुदिता ।
ननभरसहिता गदितोज्ज्वला१६ ॥
पञ्चाश्वैश्छिन्ना वैश्वदेवी१७ममौ यौ ।
अभ्राष्टाभिर्जलधरमाला१८म्भौ स्मौ ॥
इह नवमालिका१९नजभयैः स्यात् ।
भवति नजावथ मालती२०जरौ ॥
अभिनवतामरसं२१नजजाद् यः(१) ।

१३ । अथातिजगत्याम् । ८१९२

तुरगरसयतिर्नौ ततौ गः क्षमा१ ।
म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् २ ॥
चतुर्ग्रहैरतिरुचिरा३जभस्जगाः ।
वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्४ ॥

---

(१) पञ्चमुनि म्भौ सात् सयुता ललना२२ ।
ललित२३मभिहितं नौ मौनामतः ।
द्रुतपदं२४भवति नभयाश्चेत् ।
सर्वे मा यस्मिन् सोऽयं विद्याधारः२५स्यात् ।
लघुर्गुरुर्वदन्ति पञ्चचामरम्२६ ।
सारङ्गसंज्ञं२७ समस्तैस्तकारैस्तु ।
समस्तज मीरय मौक्तिकदाम२८ ।
मोटकनाम२९ समस्तभमीरय ।
रविलघु तरल३०नयनमिह । परिशिष्टम् ।

सजसाजगौ भवति मञ्जुभाषिणी५ । (१)

१४ । अथ शक्वर्याम् । १६३८४

म्तौ न्सौ गावब्धग्रहविरतिरसंबाधा१ ।

ननरसलघुगैः स्वरैरपराजिता२ ॥

ननभनलघुगैः प्रहरणकलिका३ ।

उक्ता वसन्ततिलका४तभजा जगौ गः ॥

सिंहोन्नतेय५मुदिता मुनिकाश्यपेन ।

उद्धर्षिणी६मुदिता मुनिसैतवेन ॥

इन्दुवदना७भजसनैः सगुरुयुग्मैः ।

द्विःसप्तच्छिदलोला८म्सौ म्भौ गौ चरणे चेत् ॥ (२)

---

(१) यमौ रौ विख्याता चञ्चरीकावली६गः ।

न सरयुगगैश्चन्द्ररेखा७र्तुलोकैः

ऋतुमुनियति विद्युत्८ननौ तौ गुरुः ।

इदं कान्दुकं९ यत्र येभ्यश्चतुर्भ्यो गः

भवति मृगेन्द्रमुखं १० नजौ जरौ गः ।

नयुगसयुगगुरुभिः किल चण्डी११

उपस्थित१२मिदं ज्सौ त्सौ यदि गुरुः स्यात्

जसौ सनौ गौ भवति मञ्जुहासिनी१२

इह नन्दिनी१३सजससैर्गुरुयुक्तैः ।

कुटजगति१४र्नजौ सन्ततु म्भौ गुरुः । परिशिष्टम् ।

(२) ननतज्गुरुगैः सप्तयतिर्नदी९स्यात्

लक्ष्मी१०रन्तविरामा म्सौ तनौ गुरुयुग्मम्

त्रिननगगिति वसुयति सुपवित्रम् ११ ।

मध्यक्षामा१२युगदशविरमा म्भौ न्यौ गौ

युगदिग्भिः कुटिल१३मिति म्भौ न्यौ गौ

नजभजगा गुरुश्च भवति प्रमदा१४

भजसा यलौ गिति शरग्रहैर्मञ्जरी१५

१५ । अथातिशक्वर्य्याम् । ३२७६८

द्विहतहयलघुरथ गिति शशिकला१ ।

स्रगिरति भवति रसनवकयतिरियम् ॥

वसुहययतिरिह मणिगुणनिकरः३ ।

ननमयययुतेयं मालिनी४भोगिलोकैः ।

भवति नजौ भजौ रसहितौ प्रभद्रकम्५ ।

सजनानयौ शरदशयतिरियमेला६ ।

म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा७ ।

१६ । अथाष्टौ । ६५५३६

भत्रिनगैः(२)स्वरात् खमृषभगजविलसितम्१ ।

---

नजभजगैर्गुरुश्च वसुषट् कुमारी१६

नरनरैर्लगौ च रचितं सुकेसरम् १७ ।

भ्मौ न्यौ ल्गौ चेदिह भवति च चन्द्रौरसः१८

वासन्तीयं१५स्यादिह खलु मतौ न्यौ गौ चेत् ।

चक्रशद२०मिह भ न न न न न गुरुभिः । परिशिष्टम् ।

(१) माः पञ्च स्युर्यस्यां सा कामक्रीड़ासंज्ञा८ज्ञेया ।

नजभजरैर्विराजितमिदं सुखेलकम्९ । परिशिष्टम् ।

चन्द्रकान्ताभिधा१०रौ म्सौ विरामः स्वराष्टौ ।

ननत भरक्षताष्टस्वरैरुपमालिनी११

चित्रा१२नाम छन्दो यस्मिंस्युस्त्रयो मास्ततो यौ ।

ऋषभाख्य१३मेतदुदितं सजसाः सयौ चेत् ॥

विपिनतिलकं१४नसनरेफयुग्मैर्भवेत् ।

तूणकं१५ भवेदिदं रजौ रजौ ततश्च रः ।

कथयन्ति मानसहंसनाम१६सजौ जभराः ।

सगणैः शिववक्त्रमितैर्गदिता नलिनी१७ ।

शंस निशिपालक१८मिदं भजसनाश्च रः ॥ परिशिष्टम् ।

(२) भश्च त्रयो नाश्च गश्च तैः । स्वरात् सप्तमाक्षरात् खं छिद्रं नवमाक्षरे छिन्नमिति शेषः ।

नजभजरैः सदा भवति वाणिनौरगयुक्तैः (१)

१७ । अथात्यष्टौ १३१०७२

रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी१ ।
जसौ जसयला वसुग्रहयतिश्च पृथ्वी२गुरुः ।
दिङ्मुनि वंशपत्रपतितं३भरणभनलगैः ।
रसयुगहयै न्सौ म्रौ म्लौ गो यदा हरिणी४तदा ।
मन्दाक्रान्ता५जलधिषड़गैर्म्भौ नतौ तो गुरु चेत् ।
हयदशभिर्नजौ भजजला गुरु नर्द्द(र्कु)टकम्६ ।
मुनिगुहकार्णवैः कृतयति वद कोकिलकम्७ । (२)

---

(१) चित्रसंज्ञ३मीरितं रजौ रजौ रगौ च वृत्तम् ।
जरौ जरौ ततो जगौ च पञ्चचामरं४वदेत् ।
संकथिता भरौ नरनगाश्च धीरललिता५ ।
पञ्चभकारयुताऽश्वगतिर्६यदि चान्त्यगुरुः ।
नजरभभेन गेन च स्यान्मणिकल्पलता७ ।
यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद्रूपं८नाम ।
यमौ नः सौ रौ गः प्रवरललितं ९ नाम बोध्यम् ।
गरुड़रुतं१०नजौ भजतगा भवेयुर्यदा ।
वेदाङ्गाङ्गैर्मदनललिता११मौभौ नमलसाः ।
मः समभनगा यस्यां साष्टच्छिदिह चकिता१२ ।
मौरयना नगौ च यस्यां वरयुवति १३ रियम् । परि०

(२) रसयुगहययुङ् नौ म्रौ स्रौ लगौ हि यदा हरिः८ ।
भवेत् कान्ता९युगरसहयैर्यभौ नरसा लगौ ।
ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा१० ।
ससजैरतिशायिनी११मता भजपरैर्गुरुभ्याम् ।
वेदाङ्गाश्वैर्मभनमयला गश्चेत्यसौ हारिणी१२ ।
भाराक्रान्ता१३ युगरसगैर्मभौ नरसा लगौ ।
पञ्चचामरं १४ जरौ जरौ जगौ लघुश्च । परि०

१८ । अथ धृतौ । २६२१४४

स्याद् भूतर्त्त्वश्वैः कुसुमित१लतावेल्लिता म्तौ न यौ यौ (१)

---

१९ । अथातिधृतौ । ५२४२८८

सूर्य्याश्वैर्मसजस्तता सगुरवः शार्दूलविक्रीड़ितम्१ । (२)

---

(१) मात् सौजौ भरसंयुतौ करिवाणखैर्हरिणप्लुतम् २ ।
यदि ह नयुगलं ततो वेदरेफैर्महामालिका । ३ ।
पञ्चभकारयुता स्वगति४र्यदि चान्त्यसरचिता ।
सुधा५तर्कैस्तर्कैर्भवति ऋतुभिर्योमौ नसतसाः ।
वर्णास्त्रैर्मननततमकैः कीर्त्तिता चित्रलेखेयम् ६ ।
भाद् रनना नसौ भ्रमरपदक७मिदमभिहितम् ।
शार्दूलं८वद मासषट् कयति मः सौ जसौ रौ मश्चेत् ।
अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम् ९ ।
म्नौ न्जौ भौ चेन्नल१०मिदमुदितं युगैर्मुनिभिः स्वरैः ।
सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लालसा ११ ।
च्यधिकदशयति नंनौ रौ भवेतां ररौ तारका १२ ।
भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता १३ ।
सङ्गूतलश्चैर्मौ भ्मौ विरतिश्चेत् सिंहविस्फूर्जितं१४यौ ।
सौ जजौ भरसंयुतौ करिवाणखैर्हरनर्त्तनम् १५ ।
इदं क्रीड़चक्रं१६सदीर्घं समस्तैर्यकारैः समेतम् ।
वेदाङ्गान्तैर्मभनययुगैः स्यादियं चन्द्रलेखा १७ ।
दशवसुभिरियं न युग्मं प्रसिद्धा ततो रा लसा१८ ।
शिवतुरगैस्तु नन्दन१९मिदं नजौ भजौ रद्वयम् ।
अष्टदिग्भिरियं रसौ जयुगं भरौ विबुधप्रिया२०
सूर्य्याङ्गैर्मगणः सजौ सभयुतौ शार्दूलललितम् २१ ।
हीरक२२मुदितं भसनजनैरिह रगणोऽन्ततः । परि०

(२) नयुगलगलघू निरन्तरौ यदा स पञ्चचामरः२ ।
रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुता मेघविस्फूर्जिता३स्यात् ।

२० । अथ कृतौ । १०४८५७६

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना१ ।
वोरजौगलौ(१)भवेदिहेदृशेन लक्षणेन वृत्तनाम२ । (२)

---

२१ । अथ प्रकृतौ । २०९७१५२

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा१कीर्त्तितेयम् । (३)

---

२२ । आकृतौ । ४१९४३०४

भ्मौ नरनारनावय गुरुर्दिगर्कविरमं हि भद्रक१मिदम् । (४)

---

भूताश्वाश्वान्तं मतनसररगैः कीर्त्तितं पुष्पदाम । ४ ।
वृत्तं विम्बाख्यं५ शरमुनितुरगैम्तौ न्सौ ततौ चेद् गुरुः ।
इयं छाया६ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरुः ।
रसैः षड्भिर्लोकैर्यमनसजजा गुरुमकरन्दिका ७ ।
द्विनाश्वैः स्याद् यभनयजजगाः कीर्त्तिता मणिमञ्जरी८ ।
बजाब्धितुरगैर्जसौ जसतभागश्चेत् समुद्रतता९ । परि०
(१) वि: विरावृत्तौ रगौ रगणजगणौ अन्ते गलौ च ।
(२) रसैरश्वैरश्वैर्यमननततगैर्गैन शोभिय२-मुक्ता ।
ख्याता पूर्वैः सुवंशा३ यदि मरभना सद्वयं गो गुरुश्च ।
सभरा न्मौ यलगास्त्रयीदशयतिर्मत्तेभविक्रीड़ितम् ४ ।
सगणौजयुग्मभरैः स्लगैः कथिता बुधैरिह गीतिका५ ।
सप्तर्ष्यङ्कैर्विरामो मरभनयभल गाः स्यात् सुवदना६ । परि०
(३) सलिलनिधि२ र्भवेदिह नजौ भगणौ जगणास्त्रयश्च १ रः । परि०
(४) सप्तभकारकृतावसितौ सगुरुः कविभिः कथिता मदिरा२
लालित्यं३ भुजगेन्द्रेण भाषितमेतन्नेन्मसरस्तजनगुभिः ।
सजता नसौ ररौ गः फणितुरगहयैः स्यान्महास्रग्धराख्या ।
मौ गौ नाश्चत्वारो गौ गौ भवति वसुभुवनयतिरिति हंसी ।

२३। विकृती। ८३८८६०८

यदि ह नजौ भजौ भजौभलगास्तदाश्वलालतं१हराकयति-
मत्।

---

मत्ताक्रीड़ा२ मौ त्नौ नौ नल्गिति भवति वसुशरदशयति-
युता।(१)

---

२४। संकृती। १६७७७२१६

भूतमुनीनैर्यतिरिह भतनाः स्भौ भनयाश्च यदि भवति
तन्वी१। (२)

---

२५। अतिकृती। ३३५५४४३२

क्रौञ्चपदा१ भ्मौ स्भौ ननना न्गाविषुशरवसुमुनिविरतिरिह
भवेत्।

---

२६। उत्कृती। ६७१०८८६४

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम्।
मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाह्य-
व्यम् २।

अथ दण्डके।

यदि ह नयुगलं ततः सप्त रेफास्तदा चण्डवृष्टिप्रयातो१-
भवेद् दण्डकः।

---

(१) इह सुन्दरिका३ पिङ्गलमुनिनोक्ता [सदयती भसता ज्लभगाः। परि-
शिष्टम्।

(२) नाम किरीट२-मिदं भगणा यदि पिङ्गलनागमुनीन्द्रमतं किल।
सगणैरिह वृत्तवरं वसुभिः किल दुर्मिल३ वृत्तमिदं कविभिः। परिशिष्टम्।

प्रतिचरणविवृद्धरेफाः स्युरर्णा२र्णव३व्याल४जीमूत५लीलाकरो-
६द्दाम७शङ्खा८दयः । (१)

प्रचितक२७समभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः
सप्तभिर्यैः । (२)

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रे वर्णवृत्तकथनं
नाम तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम्१ ॥

---

(१) तथा च रगणाष्टकेन रचितचरणः अर्णाख्यो दण्डकः२ । रगणनवकेन अर्णवाख्यः३ । तद्दशकेन व्यालाख्यः४ । एकादशरगणैः रचितः जीमूतः५ । द्वादशभिः रगणैः, लीलाकरः६ । त्रयोदशभिः रगणैः, उद्दामः ७ । चतुर्दशभिः रगणैः, शङ्खः८ । आदिपदात् पञ्चदशादिभिः रगणैर्घटितपादाः क्रमेण आराम९ संग्रामः१० सुराम वैकुण्ठ११ सार १२ कासार१३ विसार१४ संहार१५ नीहार१६ मन्दर१७ केदार१८ आसार१९ सतकार२० संस्कार२१ माकन्द२२ गोविन्द२३ सानन्द२४ सन्दोह२५ आनन्द२६ इत्येते ग्राह्याः ।

(२) नयुगलगुरुयुगैवं यकाराः कवीच्छानुरोधात्तदा यत्र वध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा२८ ।

यत्र रेफान् कविः स्वेच्छया पाठसौकार्य्यसापेक्षयारोपयत्येष धीरैः, स्मृतो दण्डको मत्तमातङ्गलीलाकरः२९ ।

लघुर्गुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया स दण्डकस्त्वनङ्गशेखरः स्मृतः३० ।

स्वेच्छया रजौ क्रमेण सन्निवेशयत्युदारधीः कविः स दण्डकः स्मृतो जयत्यशोक-मञ्जरी३१ ।

सगणः सकलः खलु यत्र भवेत् तमिह प्रवदन्ति बुधाः कुसुमस्तवकम्३२ ।

यकारैः कवीच्छानुरोधात् निबद्धैः प्रसिद्धो विशुद्धोऽपरो दण्डकः सिंहविक्रीड़-नामा३३ । परिशिष्टम् ।

अतयमोजगतं गुरुणी चेद्
युजि च नजौ ज्यगुतौ द्रुतमध्या२ ॥
सयुगात् सगुरू विषमे चेद्-
भाविह वेगवती३युजि भाद्गौ।
ओजे तपरौ जरौ गुरुश्चेन्-
म्सौ ज्गौ भद्रविराड्४भवेदनोजे।
असमे सजौ सगुरुयुतौ, केतुमती५समे भरनगाद्गः।
आख्यानकी६ तौ जगुरू ग ओजे
जतावनोजे जगुरू गुरुश्चेत् ॥
जतौ जगौ गो विषमे, समे चेत्
तौ ज्गौ ग एषाः विपरीतपूर्वा७ ॥
सयुगात् सलघू विषमे गुरु-
युजि नभौ भरकौ हरिणप्लुता८ ॥
अयुजि ननरला गुरुः समे
न्जमपरवक्त्र९मिदं ततो जरौ ॥
अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा१० ॥
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥
स्यादयुग्मके रजौ रयौ समे चेत्
जरौ जरौ गुरुर्यवात् परा १ मतौ११यम्। (२)

इति वृत्तरत्नाकराख्ये छन्दःशास्त्रेऽर्द्धसम वर्णवृत्तकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

(१) यवात्परा मती यवमतीति नाम।

(२) अयुजि ननभभा२ समकेऽपि तु, नयुगरयुगलं तदा कौमुदी१२।
यदि विषमे भवती नजौ जरौ। सजयाः समे तु जगुरू मञ्जुसौरभम् १३।
विषमे ससजा यदा गुरू चेत्, सभरा येन तु मालभारिणीयम्१४ परिशिष्टम्।

## पञ्चमोऽध्यायः ।

मुखपादोऽष्टभिर्वर्णैः
परेऽस्भान्मकरालयैः क्रमाद्वृद्धाः ।
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्य्यं
तदाभिहितममलधीभिः पदचतुरूर्द्ध्वाभिधं१ वृत्तम् । (१)
प्रथममुदितवृत्ते,
विरचितविषमचरणभाजि ।
गुरुकयुगलनिधन इह सहित आङा
लघुविरचितपदरचनयतिरिति भवति पीड़ः२ । (२)
प्रथमसपरचरणसमुत्थम्,
अयति स यदि लक्ष्म ।
इतरदितरगदितमपि यदि च तुर्य्यं(३)
चरणयुगलकमविकृतमपरमिति कलिका३सा ।
द्विगुरुयुतसकलचरणान्ता
मुखचरणगतमनुभवति च तृतीयम् ।
अपरमिह हि लक्ष्म
प्रकृतमखिलमपि यतिदमनुभवति लवली४सा ।
प्रथमसमधिवसति यदि तुर्य्यम(४)

---

(१) अस्मात् मुखपादात् मकरालयैश्चतुर्भिरक्षरैः क्रमाद्‌ वृद्धाः यस्य परे पादाः तथा च द्वितीयः द्वादशाक्षरैः, उपलक्षितः तृतीयः षोड़शाक्षरैः चतुर्थः विंशत्यक्षरैः तत् पदचतुरूर्द्ध्वाभिधं नाम।

(२) आङा सहितः पीड़ः आपीड़ इति वृत्तनाम ।

(३) प्रथमं तुर्य्यं चरणमपरे स्वाव्यवहिते द्वितीयचरणे समुत्थं लक्ष्म, इतरत् द्वितीयं चरणम् इतरस्मिन् स्वाव्यवहिते पूर्वे प्रथमे यत् गदितमुक्तं लक्ष्म तत् श्रयति अपरं तद्भिन्नं तृतीयं चतुर्थं च चरणमविकृतं तदा कलिकेति नाम ।

(४) यदि प्रथमं तुर्य्यं चरणं चरमचरणलयमन्त्यचरणस्थानमधिवसति यदि

चरमचरणलयमवसितिगुरुयुग्मम्।
अखिलमपरमुपरिगतमिति ललितपदयुक्ता
तदियममृतधारा५।

इति पदचतुरूर्द्ध्वप्रकरणम्।

सजसादिमे सलघुकौ च
न सजगुरुकैरथोद्गता१।
त्र्यङ्घ्रिगत भनजला गयुताः
स ज सा जगौ चरणमेकतः पठेत्।
चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम्।
ना भगौ भवति सौरभकम्२
चरणे यदीह भवतस्तृतीयके॥
नयुगलं सकारयुगलं च,
भवति चरणे तृतीयके।
तदुदितमुरुमतिभिर्ललितं३
यदि शेषमस्य खलु पूर्वतुल्यकम्।

इत्युद्गताप्रकरणम्।

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितयं सनजरगास्ततो ननौ सः। (१)
त्रिनपरिकलितजयौ
प्रचुपित१मिदमुदितमुपस्थितपूर्वम्॥

---

अपरमखिलं द्वितीयादिचरणमुपरि गतम् अपीङ्गतं लक्षणमधिवसति चेत् अवसिति गुरुयुग्ममिति तल्लक्षणबोधाय स्पष्टार्थमुक्तम् तत् अमृतधारा नाम।

(१) त्रितयं चरणानामिति शेषः। ततस्तदनन्तरे द्वितीयपादे, सनजरगाः तृतीये ननौ सः। ततस्तदनन्तरे चतुर्थे नवयजयाश्च यदा स्युः तदा उपस्थितपूर्वं प्रचुपितं नाम वृत्तम्।

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्घ्रिकृतयतिस्तु वर्द्धमानम्२ ।
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम् ॥
अस्मिन्नेव तृतीयके यदा तजराः स्युः ।
प्रथमे च विरतिरार्षभं३ब्रुवन्ति ॥
तच्छुद्धविराट्४पुरःस्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ।
इत्युपस्थितप्रचुपितप्रकरणम् ।
विषमाक्षरपादं १ वा पादैरसमं दशधर्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति१तत् पूर्वसूरिभिः प्रोक्तम् ।
इति वृत्तरत्नाकराख्ये छन्दसि विषमवृत्तकथनं
नाम पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
सङ्ख्यानमध्वयोगश्च षड़ेते प्रत्ययाः स्मृताः । (२)

---

(१) विषमाक्षरपादं यथा "मधुकैटभौ दुरात्मनौ" इति ।

"महिषेऽसुराणामधिपे" इति च चण्डी । पादैः चरणैः असमम् अतुल्यम् पञ्चाद्युपलक्षितम् दशधर्मवत् दशधर्म प्रतिपादिका महाभारतस्य गाथा तया तुल्यं सा हि षड्भिः चरणैरुपलक्षिता । यथा,

दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश । इति ।

(२) प्रस्तार्य्यन्ते विस्तार्य्यन्ते गुरुलघुरूपतया वर्णा मात्रा वा अनेन प्रस्तारः लघुगुरुवर्णादिज्ञानोपायक्रिया । "अत्रैतावतिकी भेदः किंरूपः इति पृच्छति । यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते" इत्युक्तलक्षणम् एकादिवर्णादिप्रस्तारे इयत्-

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः।
यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम्॥
ऊने दद्याद् गुरूनेव यावत् सर्वलघुर्भवेत्।
प्रस्तारोऽयं समाख्यातश्छन्दो विचितिवेदिभिः। युग्मम्। (१)

---

संख्यको भेदः कीदृश इति पृष्टे तस्य लघुगुरुसन्निवेशविशेषसमर्थनरूपोत्तरं नष्टम्। ईदृशसन्निवेशविशेषवान् भेदः कियत्सङ्ख्यक इति पृष्टे तत्समर्थनरूपोत्तरम् उद्दिष्टम्। प्रस्तारे एकद्व्यादिलघुगुरुभेदवतां क्रिया तज्ज्ञानोपायः। सङ्ख्यानं प्रस्तारसंख्या। प्रस्तारलिखनाय पर्य्याप्तः देशोऽध्वा तस्य योगः। एते षट्प्रत्ययाः प्रतीयते ज्ञायते सङ्ख्याविशेषः एभिः ते प्रत्ययाः सङ्ख्यास्वरूपविशेषादिज्ञापकाः उपायभेदाः।

(१) प्रस्तारणीयवृत्तादीनां सर्वगुरुके पादे पाद इत्युपलक्षणं वर्णानामपि। प्रथमपङ्क्तौ लिखिते आद्यात् प्रथमगुरोस्समारभ्येत्यर्थः। द्वितीयपङ्क्तौ अधः तस्यैव अधस्तात् पङ्क्तौ प्रथमं लघुं न्यस्य यथा उपरि ऊर्द्ध्वस्थपङ्क्तौ अपरे अवशिष्टाः सन्निविष्टास्तथा तस्य दक्षिणपार्श्वेषु गुर्वादयो लेख्याः। तृतीयपङ्क्तौ तु प्रथमाया गुरुव्यक्तेरधस्तात् लघुं न्यस्य शेषान् उपरिस्थद्वितीयपङ्क्तिस्थान् गुर्वादीन् न्यसेत् एवञ्च तृतीयपङ्क्तौ आद्यस्थानस्य न्यूनता तत्र किं देयमित्याकाङ्क्षायामाह, ऊने प्रस्तार्य्यसंख्यातो न्यूने सति वामभागे गुरून् दद्यात् एवं भूयो मुहुः कुर्य्यात् यावच्च सर्वलघुकः पादो भवेत्, तावदेवं कुर्य्यादित्यर्थः। वर्णप्रस्तारे लघुगुर्वोः ऋजुवक्रतया तदाकारेणोदाहरणम्।

| | | |
|---|---|---|
| प्रथमभेदः | ऽ ऽ ऽ | मगणः |
| द्वितीयो भेदः | । ऽ ऽ | यगणः |
| तृतीयो भेदः | ऽ । ऽ | रगणः |
| चतुर्थो भेदः | । । ऽ | सगणः |
| पञ्चमो भेदः | ऽ ऽ । | तगणः |
| षष्ठो भेदः | । ऽ । | जगणः |
| सप्तमो भेदः | ऽ । । | भगणः |
| अष्टमो भेदः | । । । | नगणः |

मात्राप्रस्तारे विशेषस्तु पिङ्गलादौ द्रष्टव्यः।

**नष्टस्य यो भवेदङ्कस्तस्यार्द्धेऽर्द्धे समे च लः ।**
**विषमे चैकमाधाय तस्यार्द्धेऽर्द्धे गुरुर्भवेत् ॥ (१)**

**उद्दिष्टं द्विगुणानाद्यादुपर्य्यङ्कान् समालिखेत् ।**
**लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् । (२)**

**वर्णान् वृत्तभवान् सैकानौत्तराधर्य्यतः स्थितान् ।**
**एकादिक्रमशश्चैतानुपर्य्युपरि निक्षिपेत् ॥**
**उपान्त्यतो निवर्त्तेत त्यजन्नेकैकमूर्द्धतः ।**
**उपर्य्याद्याद् गुरोरेवमेकद्व्यादिलगक्रिया । युग्मम् । (३)**

---

(१) नष्टस्य अज्ञातस्वरूपस्य योऽङ्कः प्रस्तारमध्यपाति सङ्ख्याज्ञापकः अङ्कः तस्य तत्सङ्ख्यायाः समत्वे लो लघुर्लेख्यः तस्य अर्द्धे कृते तस्य समत्वे च सति लो लघुर्लेख्यः । पुनस्तस्याप्यर्द्धे समे सति लघुः एवं यावदक्षरसङ्ख्या तावत् लेख्यः । एवं नष्टस्य सङ्ख्याया विषमत्वे गुरुः, तत्रैकमाधाय संयोज्य तस्यार्द्धे कृते सति तस्य विषमत्वे गुरुः समत्वे लघुः विषमत्वे एकयोजिते पुनरर्द्धे कृते विषमे सति गुरुः समे सति लघुः । यथा त्र्यक्षरप्रस्तारे चतुर्थो भेदः कीदृशः इति प्रश्ने, तत्सङ्ख्यायाः समत्वात् प्रथमं लघुः तस्यार्द्धे कृते तस्य द्व्यङ्कत्वात् समत्वे न पुनर्लघुः शिष्टे द्व्यङ्केऽर्द्धीकृते सति तस्य विषमत्वात् गुरुः एवञ्च चतुर्थो भेदः प्रथमद्वितीयलघुकः अन्त्यगुरुक इत्युत्तरम् ।

(२) आद्यात् आद्यवर्णमारभ्य उपरि द्विगुणान् द्विगुणान् वीप्सार्थे द्विः अङ्कान् समालिखेत् तत्र लघुवर्णोपरिस्थाङ्कैर्मिलितैः एकेन युक्तैः उद्दिष्टं स्यात् । यथा त्र्यक्षरप्रस्तारे मध्यगुरुकः भेदः कियत् सङ्ख्यक इति प्रश्ने यथोत्तरं द्विगुणान् द्विगुणान् अक्षरसङ्ख्यया अङ्कान् दद्यात् तत्र लघुवर्णोपरिस्थैरेकचतुरङ्कैर्मिलितैः पञ्चाङ्कैः एकेन युक्तैः षड़ङ्कः सम्पद्यते एवञ्च षष्ठोऽयं भेद इत्युत्तरम् ।

(३) एकादि लघुगुरुकव्यक्तिभेदसङ्ख्याज्ञानोपायमाह वर्णानित्यादि, एकाक्षरादिप्रस्तारे उदाहरणम् ।

१　　१
१　　२　　१
१　　३　　३　　१
१　　४　　६　　४　　१
१　　५　　१०　　१०　　५　　१

**लगक्रियाङ्कसन्दोहे भवेत् संख्या विमिश्रिते।**
**उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम्। (१)**

---

अत्र प्रथमाक्षरसङ्ख्या एकाङ्कः तत्र योजनं न सम्भवति उपरिस्थाङ्काभावात्। द्वितीयपङ्क्तौ द्व्यक्षरसङ्ख्या द्वावेकाङ्कौ सैकौ उपरिस्थेन प्रथममेकाङ्केन युक्तः द्व्यङ्कः। द्व्यङ्कस्य पुनर्योजनं नास्ति उपान्त्यतो निवर्त्ततेत्युक्तेः। तृतीयपङ्क्तौ। त्र्यक्षरवृत्तानुसारेण त्रयोऽङ्काः सैकाः स्थाप्याः तत्र उपरिस्थाभ्यामेकद्व्यङ्काभ्यां योगे त्र्यङ्कः पुनः द्व्यङ्केकाभ्यां योगेन त्र्यङ्कः ततो न मेलनम्। एवं चतुरक्षरादौ ज्ञेयम्। एवञ्चात्र प्रथमाङ्केन सर्वलघुः सर्वगुरुर्वा एको भेदः। एवं द्वितीयस्थानस्थाङ्कसूचिताः एकलघुका एकगुरुका वा भेदाः। तृतीयस्थानस्थाङ्कसूचिताः द्विलघुका द्विगुरुका वा भेदाः अन्त्यस्थाङ्केन सर्वगुरुः सर्वलघुको वा एको भेदो ज्ञेयः।

> एतदुपायान्तरं लीलावत्यामुक्तमत्र प्रदर्श्यते,
> एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः॥
> परः पूर्वेण संगुण्यस्तत्परस्तत्परेण च।
> एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम्"॥

अस्यार्थः

एकादयो यथाक्रममेकैकोत्तरा अङ्का व्यस्ताः स्थाप्याः ते च क्रमस्थितैस्तैरेवाङ्कैर्भाज्याः। किं कृत्वेत्याशङ्कायामाह, परः परवर्त्ती अङ्कः पूर्वेण पूर्वलब्धाङ्केन संगुण्यः पूरयितव्य इत्यर्थः। तत्परः तदुत्तराङ्कः तत्परेण पूर्वलब्धात् परवर्त्तिना अङ्केन संगुण्य इत्येवं यावत्समाप्ति भाज्याः।

उदाहरणानि।

| | त्र्यक्षरे | | | चतुरक्षरे | | | |
|---|---|---|---|---|---|---|---|
| भाज्याः | ३ | २ | १ | ४ | ३ | २ | १ |
| भाजकाः | १ | २ | ३ | १ | २ | ३ | ४ |
| लब्धानि | ३ | ३ | १ | ४ | ६ | ४ | १ |
| | एकलघुः | द्विलघुः | त्रिलघुः | १लघुः | २लः | ३लः | ४लः |
| | एकगुरुः | द्विगुरुः | त्रिगुरुः | १गुरुः | २गः | ३गः | ४गः |

(१) क्रमप्राप्तप्रस्तारभेदसंख्यानमाह,—लगक्रियेत्यादिः। सन्दोहः समाहारः प्रकारान्तरमाह, उद्दिष्टाङ्कानां समाहारः सैकः एकेन सहितः इमां प्रस्तारव्यक्ति-

संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्त्तितः ।
वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्य्यात्तथाङ्गुलिम् ॥ (१)
वंशेऽभूत् कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधी ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्तः
छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥

इति वृत्तरत्नाकराख्ये छन्दसि प्रस्तारादिकथनं नाम षष्ठोऽध्यायः ।

समाप्तश्चायं ग्रन्थः ।

---

भेदसंख्यां जनयेत् बोधयेत् इदमुपलक्षणम् । लीलावत्युक्त एकद्व्यादिलगव्यक्ति-समाहारः सैकोऽपि प्रस्तारभेदसङ्ख्यां बोधयेदेवेति बोध्यम् ।

(१) क्रमप्राप्तमध्वयोगमाह । द्विगुणा द्विरावृत्ता सङ्ख्या प्रस्तारसङ्ख्या एकोना सती अध्वा प्रकीर्तितः तदुपपत्तिमाह । यतः वृत्तस्य वृत्तसंस्थानस्य आङ्गुलिकीं व्याप्तिं स्थानं मुक्ति शेषः अङ्गुलिं अङ्गुलिमितं स्थानम् अधः कुर्य्यात् । यथा त्र्यक्षरे अष्टौ भेदसङ्ख्या तल्लेखनस्थानानि अष्टौ भेदयोरन्तरालस्थानानि सप्त इति पञ्चदश स्थानानि पञ्चदशाङ्गुलिमितानि कार्य्याणि तत्र अष्टौ भेदस्थानानि सप्त तदन्तरालदेशस्थानानि इति विशेषः । द्विगुणा प्रस्तारसङ्ख्या एकेन ऊना पञ्चदशसङ्ख्या भवति इति तथोक्तमिति बोध्यम् ।

इति श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्यकृता

वृत्तरत्नाकरविवृतिः समाप्ता ।

# छन्दोमञ्जरी ।

## प्रथमः स्तवकः ।

देवं प्रणम्य गोपालं वैद्यगोपालदासजः ।
सन्तोषातनयश्छन्दो गङ्गादासस्तनोत्यदः ॥ (१)
सन्ति यद्यपि भूयांसश्छो ग्रन्था मनीषिणाम् ।
तथापि सारमाकृष्य नवकार्थो ममोद्यमः ॥ (२)
इयमच्युतलीलाढ्या सद्वृत्ता जातिशालिनी ।
छन्दसां मञ्जरी कान्ता सभ्यकण्ठे लगिष्यति ॥ (३)

---

ग्रन्थारम्भे विघ्नविध्वंसाय स्वेष्टदेवताप्रणतिरूपमङ्गलमाचरन् प्रतिपाद्यं निर्दिशति देवमिति। वैद्यः यः गोपालदासः तस्मात् जात इति तथोक्तः सन्तोषा नाम काचित् रमणी, तस्यास्तनयः गङ्गादासः देवं गोपालं नन्दसुतं प्रणम्य अदः वक्ष्यमाणप्रकारं छन्दः तदाख्यं ग्रन्थमित्यर्थः तनोति प्रकटयति ॥ १ ॥

ननु बहवः पिङ्गलादिकृताः छन्दो ग्रन्थाः सन्ति तत् कथं ते पुनरयमुद्यम इत्याशङ्क्याह सन्तीति। यद्यपि मनीषिणां विदुषां पिङ्गलाचार्य्यादीनां भूयांसः अतिबहवः छन्दो ग्रन्थाः सन्ति विद्यन्ते तथापि सारं तेषामिति शेषः आकृष्य सङ्गृह्य नवकार्थः नवका नव्याः बालास्तदर्थः तेषां सुखबोधार्थ इत्यर्थः मम उद्यमः यत्नः ॥ २ ॥

न केवलं बालबोधार्थोऽयं ग्रन्थः, अत्रेश्वरलीलावर्णनात् सभ्यानां प्रवीणानामपि सन्तोषः सम्भवतीत्याह इयमिति। इयं छन्दसां मञ्जरी अच्युतस्य कृष्णस्य लीलया तद्वर्णनेनेत्यर्थः आढ्या युक्ता सत् उत्कृष्टं वृत्तं चरितं सूत्रगठनरूपमिति भावः यत्र तादृशी सत्पद्या च, जातिशालिनी जातिर्मात्रागणनान्वितं छन्दः आर्य्यादिः तया शालते शोभते इति तथोक्ता, जात्या जन्मना शालते इति तथोक्ता च अत-एव कान्ता मनोरम्या सती सभ्यानां विदुषां कण्ठे लगिष्यति स्थास्यति भगवल्लीला-रसलोभात् सभ्याः सततमेतं सन्दर्भं पर्य्यालोचयिष्यन्तीति भावः। उक्तञ्च विदग्ध-माधवे यथास्मिन् सन्दर्भे यदपि कविता नातिललिता मुदं धास्यन्त्युच्चैस्तदपि हरि-

पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसंख्यातं जातिर्मात्रा कृता भवेत् ॥ (४)
सममर्द्धसमं वृत्तं विषमञ्चेति तत् त्रिधा ।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः ॥ (५)
आदिस्तृतीयवत् यस्य पादस्तुर्य्यो द्वितीयवत् ।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम् ॥ (६)
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ (७)

---

गस्मात् बुधगणा इति यद्यपि मञ्जर्य्याः कर्णभूषणत्वप्रसिद्धिरस्ति तथापि अस्या वाङ्मयत्वात् कान्तासादृश्याच्च कण्ठलग्नत्वमुक्तं कण्ठलग्ना च श्रोतुः कर्णमलङ्करोतीति अस्या मञ्जरीत्वव्यपदेशः। उक्तञ्च विदग्धमाधवे कथं भवतः कर्णपूरीकृतेयं सन्दर्भमञ्जरीति ॥ ३ ॥

प्रकृतं निर्दिशति पद्यमिति। चतुर्णां पदानां श्लोकीयतुरीयभागानां समाहारः चतुष्पदी समाहारद्विगुः। पद्यते कीर्त्त्यते इति पद्यं तदाख्यं भवतीति शेषः। तच्च पद्यं द्विधा। वृत्तं जातिश्च। अक्षरैः वर्णैः संख्यातं गणितं पद्यं वृत्तम्। मात्रा लघ्वक्षरं तया कृता रचिता पद्यमित्यर्थः विधेयप्राधान्यात् स्त्रीत्वं जातिः। उक्तञ्चाग्नेये मात्राभिर्गणना यत्र सा जातिरिति काश्यप। गणना लघुवर्ण एकमात्रः गुरुस्तु द्विमात्रः। उक्तञ्च एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकमिति ॥ ४ ॥

सममिति। तत् वृत्तम् अक्षरसंख्यातं छन्द इत्यर्थः त्रिधा भवतीति शेषः समम् अर्द्धसमं विषमञ्च। समाश्चत्वारः पादा यत्र तत् समं भवति, यस्य वृत्तस्य आदिः प्रथमः पाद इत्यर्थः तृतीयवत् तृतीयपादवदित्यर्थः तथा तुर्य्यः चतुर्थः पादः द्वितीयवत् द्वितीयपादवत् तत् वृत्तम् अर्द्धसमं भवति, भिन्नं चिह्नं लक्षणं येषां तादृशाः चत्वारः पादा यस्य तादृशं वृत्तं विषमं परिकीर्त्तितं कथितम् ॥ ५ ॥ ६ ॥

इदानीं छन्दोलक्षणोपयोगिनः सङ्केतितान् दशगणानुल्लिखति म्यरस्तेति लः लघुरन्तः येषां तथोक्तैः एभिः म य र स त ज भ न गैः दशभिरक्षरैः विष्णुना त्रैलोक्यमिव समस्तं वाङ्मयं शास्त्रं व्याप्तं पूरितम्। एतैरेव दशभिरक्षरैश्छन्दांसि वर्ण्यन्ते इति भावः ॥ ७ ॥

मस्त्रिगुरुस्त्रिलघुश्च नकारो
भादिगुरुः पुनरादिलघुर्यः ।
जोगुरुमध्यगतो रलमध्यः
सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ (८)

गुरुरेको गकारस्तु लकारो लघुरेककः ॥
क्रमेण चैषां रेखाभिः संस्थानं दृश्यते यथा ॥
म ऽ ऽ ऽ, न । । ।, भ ऽ । ।, य । ऽ ऽ, ज । ऽ ।,
र ऽ । ऽ, स । । ऽ, त ऽ ऽ ।, ग ऽ, ल ।, ॥ (९)

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्य्यादिषु संस्थिताः ॥
यथा ( ऽ ऽ ) ( ॥ ऽ ) ( । ऽ । ) ( ऽ ॥ ) ( ॥ ॥ ) ॥ (१०)

---

पूर्वोक्तानामक्षराणां सङ्केतितार्थान् दर्शयति म इति। त्रयो गुरवो यत्र स गणः मः, त्रयो लघवः यत्र स गणः नकारः, आदिः गुरुर्यस्य स गणः भकारः, आदिः लघुर्यस्य स गणः यः, गुरुः मध्यगतः यस्य तादृशो गणः जः, लघुः मध्यः यस्य तादृशो गणो रकारः, अन्तः गुरुर्यस्य तादृशो गणः सः, अन्तः लघुर्यस्य तादृशः गणः तः भवतीति सर्वत्र योज्यम्। यथा मगणः मेधावी। नगणः चलति। भगणः साधव। यगणः नराणाम्। जगणः रमेश। रगणः पर्वतः। सगणः रमणः। तगणः धीरेण। इत्यादि ॥ ८ ॥

गुर्विति। एकः गकारः गुरुः, एककः लकारो लघुः रलौ गुरुलघू इत्यर्थः। क्रमेण च यथाक्रमं मकारादिक्रमेणेत्यर्थः रेखाभिः चिह्नविशेषैरित्यर्थः एषां मादीनां दशानां गणानां संस्थानम् आकृतिः दृश्यते प्रकाश्यते यथा। म ऽ ऽ ऽ, न । । ।, भ ऽ । ।, य । ऽ ऽ, ज । ऽ ।, र ऽ । ऽ, स । । ऽ, त ऽ ऽ ।, ग ऽ, ल । ॥ ९ ॥

वृत्तस्य गणान् उक्त्वा जातेर्गणान् निर्दिशति ज्ञेया इति। अत्र ग्रन्थे आर्य्यादिषु जातिच्छन्दःसु इत्यर्थः चतुष्कलाः चतुर्मात्राः सर्वान्तमध्यादिगुरवः सर्वगुरवः अन्तगुरवः मध्यगुरवः आदिगुरव इत्यर्थः चतुर्भिर्लघुभिः उपेताः चतुर्लघव इत्यर्थः पञ्चगणाः संस्थिताः तथा च सर्वगुरवः यथा रामा। अन्तगुरवः यथा तरवः,

सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत्।
वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपि वा॥ (११)
अत्र पादान्तगो लघुर्गुरुर्भवेद्वा। यथा।
तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दरी ग्राम्यजनो मिष्टमश्नाति॥ (१२)
सुन्दरीति ग्राम्यशब्दे परे विकल्पेन लघुत्वम्। तथा भट्टिः।
अथ लुलितपतत्त्रिमालं रुग्णाशनबाणकेशरतमालम्।
स वनं विविक्तमालं सीतां द्रष्टुं जगामालम्॥ (१३)

---

मध्यगुरवः यथा नवीन, आदिगुरवः यथा माधव। चतुर्लघवः यथा कलरव॥ १०॥

गुरुलक्षणं निर्दिशति सानुस्वार इति। सानुस्वारः अनुस्वारसहितः। उपलक्षणमेतत् अवसाने व्यञ्जनान्तोऽपि लघुर्गुरुर्भवतीति बोध्यम्। दीर्घश्च दीर्घवर्णश्च विसर्गी च विसर्गयुक्तश्च संयोगः संयुक्तवर्णः तस्य पूर्वः पूर्ववर्णश्च तथा पादान्तगः चरणान्तस्थितः लघुरपीत्यर्थः गुरुः भवेत्। अत्रेति। अत्र छन्दसि इत्यर्थः पादान्तगः लघुः गुरुः वा भवेत्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् वृत्तेषु लघोर्गुरुत्वं वा स्यात्। जातिषु तु लघोर्गुरोश्च गुरुत्वं वा स्यादिति बोद्धव्यम्। पादान्तगलघोर्गुरुत्वे यदि बन्धदार्ढ्यहानिर्न भवेत् तदा न दोषः। अन्यथा तु दोषः उक्तञ्च दर्पणे। दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च। अत्र वस्त्राण्यपीति लघुरपि गुरुतां भजते। तथा च बन्धदार्ढ्यमेव पादान्तलघोर्गुरुत्वे हेतुः। तस्मात् पादान्तलघोर्यो गुरुभाव उक्तः सर्वत्र द्वितीयचतुर्थपादविषयः प्रथमतृतीयपादविषयस्तु वसन्ततिलकादाविति मन्तव्यम्॥ ११॥

तरुणमिति। हे सुन्दरि! ग्राम्यजनः तरुणं नवं शर्षपशाकं नवौदनं नवान्नं पिच्छिलानि अघनानि दधीनि च अल्पव्ययेन अश्नाति भक्षयति। अत्र आर्यावृत्तं तस्याश्च वक्ष्यमाणलक्षणरीत्या आद्ये पादे द्वादशमात्राः, द्वितीये पादे अष्टादश तृतीये पादे द्वादशमात्राः चतुर्थे पञ्चदशेति नियमः। ततश्चात्र द्वितीयचतुर्थपादान्तलघ्वोर्गुरुत्वं तृतीये च सुन्दरीति ग्राम्यशब्दे परत्र स्थितेऽपि वैकल्पिकत्वात् न गुरुत्वमिति न छन्दोभङ्गदोष इति बोध्यम्॥ १२॥

अत्र प्रथमपादान्तगुरोर्लघुत्वम् । तथा मत्पितुः पारिजातहरणनाटके ।

सिन्दूरपूरकृतगैरिकरागशोभे
शश्वन्मदस्रवणनिर्झरवारिपूरे ।
संग्रामभूमिगतमत्तसुरेभकुम्भ-
कूटे मदीयनखराशनयो विशन्तु ॥ (१४)

अत्र तृतीयचतुर्थपादान्तलघोर्गुरुत्वम् । तथा ममाच्युतचरितेऽपि ।

रक्तेन केशिदशनक्षतसम्भवेन
रेजे स मण्डिततरो हरिबाहुदण्डः ।
तद्दन्तसन्दलितभीमभुजप्रताप-
वह्नेरिव स्फुटकणप्रकरेण कीर्णः ॥ (१५)

---

अथेति । अथ दाहानन्तरं लुलितानां पतत्रिणां पक्षिणां माला संहतिः यस्मिन् तत् रुग्णाः भग्नाः असनादयो यस्मिन् वने असनः पीतसालः बाणः झिण्टीविशेषः केशरी नागकेशरः तमालः स्वनामख्यातो वृक्षः, विविक्ताः पृथग्भूताः मालाः पङ्क्तयो यत्र तद्वनम् अशोकवनम् इत्यर्थः स हनूमान् अलं पर्य्याप्तं सीतां द्रष्टुं जगाम । अत्र पुष्पितयमकम् ॥ १३ ॥

सिन्दरेति । इन्द्राय कुपितस्य गरुत्मत उक्तिरियम् । मम इमे मदीया नखरा एव अशनयः वज्राणि सिन्दरपूरेण सिन्दूरसङ्घेन कृता गैरिकरागस्य शोभा यस्य तादृशे, शश्वत् अनसं यत् मदस्रवणं मदक्षरणं तदेव निर्झरवारिपूरः प्रस्रवणजलौघः यस्मात् तथाभूते संग्रामभूमिं गतः यः मत्तः सुरेभः सुरहस्ती ऐरावत इत्यर्थः तस्य कुम्भकूटे शिरः पिण्डशृङ्गे कुम्भौ तु पिण्डौ शिरस इति कूटोऽस्त्री शिखरं शृङ्गमिति चामरः । विशन्तु प्रविशन्तु नखरप्रहारैस्ते ऐरावतकुम्भौ विदारयामीति भावः । अत्र सिन्दरपूरे गैरिकरागत्वारोपः मदस्रावे निर्झरवारित्वारोपः कुम्भे कूटत्वारोपः नखरे च अशनित्वारोपः शाब्दः केवलं सुरेभे पर्वतत्वारोप आर्थः तस्मादेकदेशविवर्त्तिरूपकमलङ्कारः तदुक्तं दर्पणे, यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तदिति । वसन्ततिलकं वृत्तम् ॥ १४ ॥

अत्र प्रथमतृतीयपादान्तस्यापि लघोर्गुरुत्वम्।

प्रह्वेवेति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम्। ततश्च कुमारे।

सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे॥ (१६)

अत्रप्रशब्दे परे गुरोर्लघुत्वम्।

प्राप्य नाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय।
औपनीविकमरुन्ध किल स्त्री वल्लभस्य करमात्मकराभ्याम्॥ (१७)

इति माघे। अत्र ह्रशब्दे परे गुरोर्लघुत्वम्। तीव्रप्रयत्नोच्चारणेनात्र लघुत्वमिति कण्ठाभरणः। यदुक्तम्

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्।
न छन्दो भङ्ग इत्याहुस्तदा दोषाय सूरयः॥ (१८)

---

रक्तेनेति। स हरिबाहुदण्डः केशीनाम कश्चिदसुरः तस्य दशनैः यत् चत व्रणः तस्मात् सम्भवो यस्य तथोक्तेन रक्तेन मण्डिततरः अतिशयेन शोभितः सन् तस्य केशिनः दन्तैः सन्दलितः विदारितः यः भीमः भयङ्करः भुजः बाहुः तस्य प्रताप एव वह्निः तस्य स्फुटः उज्ज्वलः कणानां प्रकरः समूहः तेन कीर्णः व्याप्त इव रेजे शुशुभे। अत्र प्रतापे वह्न्यारोपणात् रूपकानुप्राणितोत्प्रेक्षालङ्कारः। तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति। वृत्तं वसन्ततिलकम्॥१५॥

सेति। मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी गृहीत प्रत्युद्गमनीयवस्त्रं धौतवस्त्रं यया सा धौतावसनाच्छादिता सा पार्वती निर्वृत्तः निष्पन्नः पर्जन्यस्य जलेनाभिषेको यस्याः सा प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधा इव रेजे शुशुभे॥ १६॥

प्राप्येति। नाभिरेव ह्रदः इति रूपकं तत्र मज्जनं प्राप्य आशु झटिति निवसनग्रहणाय वस्त्राकर्षणाय स्नातस्य वस्त्रग्रहणं युक्तम्। प्रस्थित प्रवृत्तम् उपनीवि नीविसमीपे प्रायेण तत्र भवं औपनीविकं तत्र व्यापृतम् इत्यर्थः। वल्लभस्य प्रत्युत करं स्त्री आत्मकराभ्याम् अरुन्ध किल रोधं नादृतवती इत्यर्थः॥ १७॥

यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥ (१९)
क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते सा शोभां व्रजति पदमध्ये त्यजति च।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया॥ (२०)
अयञ्च श्लोकश्छन्दो गोविन्दे मम गुरोर्गङ्गादासस्य।

---

संयुक्तवर्णात् पूर्वस्य गुरुत्वं न सार्वत्रिकमिति प्राचां मतमाह यदेति। यदा तीव्रप्रयत्नेन अतिद्रुतपठनेनेत्यर्थः संयोगादेः संयुक्तवर्णात् पूर्वस्य अगौरवं लघुत्वं भवतीति शेषः तदा छन्दोभङ्गः न दोषाय इति सूरयः विद्वांस आह्नः कथयन्ति। यथा नाहं वाली सुमाहर्न्तखरत्रिशिरसौ दूषणस्ताड़काहमिति। अत्र खरत्रिशिरसाविति तीव्रप्रयत्नोच्चार्य्यत्वात् त्रौति संयुक्ते वर्णे परेऽपि रस्य न गुरुत्वमिति बोध्यम्॥ १८॥

यतिलक्षणं दिरूपयति यतिरिति। जिह्वाया इष्टम् अभिलषितं यत् विश्रामस्थानं सा यतिः कविभिः उच्यते कथ्यते। यत्र स्वेच्छया जिह्वा विरमति सैव यतिरित्यर्थः। सा च विच्छेदविरामाद्यैः पदैः निजेच्छया निजस्य कवेरित्यर्थः इच्छया वाच्या अभिधेया। विच्छेदविरामादिशब्दा यतिपर्य्यायाः, कवयः येन यतिपर्य्यायेण यतिमभिधातुमिच्छन्ति तेनैव सा वक्तव्येति भावः॥ १९॥

तद्विशेषमाह क्वचिदिति। पूर्वकृतिभिः पूर्वपण्डितैः अभिहिता यतिः क्वचित् छन्दसि न तु सर्वत्रेत्यर्थः आस्ते। सा यतिः पदान्ते स्थिता चेदिति शेषः शोभां व्रजति प्राप्नोति, पदमध्ये त्यजति च शोभामिति शेषः पदमध्ये यतिर्दोषावहेति भावः। पुनः किन्तु तत्रैव पदमध्ये एव असौ यतिः स्वरेण स्वरवर्णेन विहितः कृतः सन्धिर्यत्र तथाभूता चेदिति शेषः तां शोभां श्रयति भजते। उदाह्रियते यथेति अतुलः निरुपमः महिमा यस्य तथाभूतः कृष्णः करुणया कृपया मां पुष्णातु पालयतु। अत्र पुष्णा इत्यस्मात् यतिः पुष्णात्विति पदमध्येऽपि न दुःश्रवत्वमापादयतीति न शोभाविरह इति भावः। फलितार्थस्तु यत्र यत्या श्रुतिकटुत्वं न स्यात् तत्रैव यतिर्माननीयेति। शिखरिणीछन्दमिदम्॥ २०॥

श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम्।
इत्याह भट्टः स्वग्रन्थे गुरुर्मे पुरुषोत्तमः॥ (२१)
अतएव मुरारिः।
सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डली-
लीलालून पुनर्विरूढ़शिरसो वीरस्य लिप्सोर्वरम्।
याञ्चादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृणिवत्यभितो मुखानि स दशग्रीवः कथं कथ्यताम् (२२)
इति। जयदेवोऽपि।
साध्वी माध्वीक! चिन्ता न भवति भवतः शर्करे कर्करासि
द्राक्षे! द्रक्ष्यन्ति के त्वाममृत! मृतमसि क्षीर! नीरं रसस्ते।
माकन्द! क्रन्द कान्ताधर! धरणितलं गच्छ यच्छन्ति यावद्
भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि॥ (२३)
एवमन्येऽपि।

---

श्वेतेति। श्वेतमाण्डव्यमुख्याः नाम पण्डितास्तु यतिं न इच्छन्ति, मे मम गुरुः पुरुषोत्तमः भट्टः स्वस्य आत्मनः ग्रन्थे इति आह ब्रवीति॥ २१॥

सन्तुष्ट इति। मिथिलायां हरधनुर्भङ्गकाले शतानन्दं प्रति रावणदूतस्य उक्तिरियम्। तिसृणां पुरां अन्तरीक्षस्थितानामिति शेषः रिपौ शिवे सन्तुष्टेऽपि वरदानाय समागतेऽपीति यावत् कण्डूला रणकण्डूतिवती या दोर्मण्डली बाहुसङ्घः विंशतिः बाहव इत्यर्थः तस्या लीलया हेलया लूनानि छिन्नानि पुनर्विरूढ़ानि शिरांसि यस्य तथाभूतस्य एकं एकं मुण्डं छित्वा हराय आहुतिं दत्तवत इति भावः वरम् अभिलषितं लिप्सोः लब्धुमिच्छोः वीरस्य यस्य दशग्रीवस्य रावणस्य अभितः समन्तात् स्थितानीति शेषः मुखानि याच्ञया भिक्षया यत् दैन्यं दीनभावः तेन पराञ्चि परागतानि कुण्ठितानीति यावत् सन्ति मिथः परस्परं त्वं वृणु त्वं वृणु इति कलहायन्ते कलहं कुर्वन्ति स दशग्रीव कथं केन प्रकारेण कथ्यतां वर्ण्यतां मयेति शेषः अवर्णनीयमहिमापि स ते राजकन्यां मैथिलीं प्रार्थयते इति भावः। शार्दूलविक्रीड़ितं वृत्तम्। अत्र तृतीये पादे द्वादशवर्णान्ते यतिः स्थितेति द्रष्टव्यम्॥ २२॥

कत्यद्रिप्रतिरोधिताः कति नदीपाथोनिधिप्लाविताः
कत्येवाटवितां गताः कति न वा भूदेवदेवैर्वृताः।
भूम्यो भूमिपतीन्द्र! तावकयशः प्रस्तावनामण्डली
कोष्ठीकृत्य जगद्धनं कति वराटीभिर्मुदं यास्यतीति ॥ (२४)

---

साध्वीति। हे माध्वीक! मधो! शृङ्गारसारस्वतमयजयदेवस्य शृङ्गाररसमयजयदेवकवेः वचांसि विश्वक् समन्तात् यावत् भावं प्रीतिमिति यावत् यच्छन्ति ददति लोकान् रञ्जयन्तीति शेषः तावत् भवतः तव चिन्ता साध्वी मनोरमेत्यर्थः न भवति, हे शर्करे! त्वं कर्करा असि, हे द्राक्षे! के जनाः त्वां द्रक्ष्यन्ति? न केऽपीत्यर्थः। हे अमृत! त्वं मृतम् असि, हे क्षीर! ते तव रसः स्वादः नीरं जलवदित्यर्थः, हे माकन्द! रसाल! क्रन्द रुदिहि हे कान्ताधर! प्रियाधर! त्वं धरणितलं पातालं गच्छ, सर्वेभ्योऽपि जयदेववाक्यस्य अतिमधुरत्वात् माध्वीकादिनिर्भर्त्सनमिति भावः अत्र तृतीये पादे सप्तमवर्णान्ते यतिः स्वरविहितसन्धित्वात् शोभां त्यजति, परं चतुर्थे पादे सप्तमवर्णान्ते स्थिता न शोभते इति ध्येयम्। स्रग्धरावृत्तम् ॥ २३ ॥

कतीति। राजस्तुतिरियम्। हे भूमिपतीन्द्र! राजश्रेष्ठ! तव कति भूम्यः भूप्रदेशाः अद्रिप्रतिरोधिताः पर्वतव्याप्ताः कतिषु पर्वतेषु ते आधिपत्यमित्यर्थः। कति भूम्यः नदीभिः पाथोनिधिभिः समुद्रैश्च प्लाविताः नदीषु समुद्रेषु च ते आधिपत्यमित्यर्थः। कति भूम्यः अटवितां काननत्वं गताः वनेषु च ते आधिपत्यमित्यर्थः कति वा भूम्यः भूदेवैः ब्राह्मणैः देवैश्च प्रतिष्ठितदेवमूर्त्तिभिरित्यर्थः न वृता न व्याप्ताः अपि तु व्याप्ता एव ब्राह्मणेभ्यः ब्रह्मोत्तरदानेन देवानां प्रतिष्ठापनेन च ते बह्वी भूमयो गता इति भावः। तावकयशः प्रस्तावनामण्डली त्वद्यशोवर्णनपरम्परा जगतां धनं कोष्ठीकृत्य विषयीकृत्य कति वराटीभिः कतिपयैः वराटकैः मुदं हर्षं यास्यति? अत्यल्पं जगद् वित्तं न ते योग्यमिति मत्वा प्रीतिं न प्राप्स्यतीत्यर्थः। अथवा जगद्धनं जगद्धननामानं मामिति शेषः कोष्ठीकृत्य विषयीकृत्य आस्कन्द्येत्यर्थः कति वराटीभिः मुदं यास्यतीति कस्यचित् सामन्तस्योक्तिः तव भूमयः प्रायशो निष्करत्वेन स्थिताः तत् कथं मां त्वद्भूमिभोक्तारमति पीडयसीति भावः। अत्र प्रथमे पादे द्वादशवर्णान्ते चतुर्थे पादे द्वादशवर्णान्ते यतिः पदमध्यस्थितत्वात् नातिशोभते इति बोध्यम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः।
पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम्॥ (२५)
उक्थात्युक्था तथा मध्या प्रतिष्ठान्या सुपूर्विका।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च॥ २६॥
त्रिष्टुप् च जगती चैव तथातिजगती मता।
शक्वरी सातिपूर्वा स्यादष्ट्यत्यष्टी तथा स्मृते॥ २७॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।
विकृतिः संस्कृतिश्चैव तथातिकृतिरुत्कृतिः।
इत्युक्ताश्छन्दसां संज्ञाः क्रमशो वच्मि साम्प्रतम्॥२८॥
इति छन्दोमञ्जर्यां सुखबन्धाख्यः प्रथमः स्तवकः।

---

## द्वितीयः स्तवकः।

### अथ समवृत्तम्।

---

उक्था। (२)

(एकाक्षरा वृत्तिः)

१। गः श्रीः। (१)

श्रीस्ते सास्ताम्। (२)

---

समवृत्तानाम् अक्षरभेदेन नामान्याह आरभ्येति एकाक्षरात् पादात् आरभ्य उपक्रम्य एकैकाक्षरवर्द्धितैः पादैः षड्विंशतिं गतं षड्विंशतिभेदम् उक्थादिसंज्ञं छन्दः स्यात्॥ २५॥

---

(१) गः श्रीरिति गः एको गुरुवर्णः यदि चरणे स्यात् तदा श्रीर्नाम छन्दः स्यादित्यर्थः। सर्वत्रैव छन्दो लक्षणे तल्लक्षणोदाहरणे सिद्धेऽपि बालकानां बोध-सौकर्य्याय पृथगुदाहरणं द्रष्टव्यम्।

अत्युक्था । [ ४ ]

( द्व्यक्षरा वृत्तिः । )

१ । गौ स्त्री । ( ३ )

गोपस्त्रीभिः कृष्णो रेमे । ( ४ )

---

मध्या । [ ८ ]

( त्र्यक्षरा वृत्तिः )

१ मो नारी । ( ५ )

गोपानां नारीभिः । श्लिष्टोऽव्यात् कृष्णो वः ॥ ( ६ )

२ रो मृगी । ( ७ )

सा मृगीलोचना । राधिका श्रीपतेः ॥ ( ८ )

---

प्रतिष्ठा । [ १६ ]

( चतुरक्षरा वृत्तिः )

१ ग्मौ चेत् कन्या ॥ (९)

---

(२) श्रीवृत्तमुदाहरति श्रीरिति । सा श्रीः ते तव आर्त्ता भवतु इत्यर्थः ।

(३) गाविति । गौ यस्य पादौ गुरुवर्णद्वयघटितः स्यात् तत् स्त्रीनाम छन्दः स्यात् ।

(४) उदाहरति । गोपेति कृष्णः गोपस्त्रीभिः गोपाङ्गनाभिः रेमे विजहार ।

(५) म इति । यस्य मः त्रिगुरुघटित इत्यर्थः । पादः, तत् नारीनाम-वृत्तं स्यात् ।

(६) उदाहरति गोपानामिति । गोपानां नारीभिः श्लिष्टः आलिङ्गितः कृष्णः वः युष्मान् अव्यात् रक्षतु । अवरक्षणे आशीर्लिङ् ।

(७) र इति । यस्य पादः रः लघुमध्यघटित इत्यर्थः तत् मृगी नाम वृत्तं स्यात् ।

(८) उदाहरति । श्रीपतेः कृष्णस्य सा मृगीलोचना राधिका प्रिया आसी-दिति शेषः ।

भास्वत्कन्या सैका धन्या। यस्याः कूले कृष्णोऽखेलत्॥ (१०)

२। नगि सती॥ (११)

सुररिपो! तव पदम्। नमति सा ननु सती॥ (१२)

---

## सुप्रतिष्ठा। [ ३२ ]

( पञ्चाक्षरा वृत्तिः )

१। भ्गौ गिति पङ्क्तिः॥ (१३)

कृष्णसनाथा तर्णकपङ्क्तिः।
यामुनकच्छे चारु चचार॥ (१४)

२। सलगैः प्रिया॥ (१५)

व्रजसुभ्रुवो विलसत्कलाः।
अभवन् प्रिया मुरवैरिणः॥ (१६)

---

(९) ग्मौ इति चेत् यदि पादे ग्मौ गुरुवर्ण एकः मश्च गुरुत्रयमित्यर्थः, तथा च गुरुचतुष्टयघटितः यस्य पादो भवतीत्यर्थः तत् कन्या नाम वृत्तं स्यात्।

(१०) उदाहरति भास्वदिति। यस्याः कूले तटे कृष्णः अखेलत् क्रीड़ितवान् सा एका भास्वतः सूर्य्यस्य कन्या यमुनेत्यर्थः धन्या पुण्यवतीत्यर्थः।

(११) नगीति। नगि नः त्रयो लघुवर्णा गश्च तस्मिन् लघुत्रयात् परम् एकगुरुवर्णघटिते पादे सतीति यावत् सती नाम वृत्तं स्यात्।

(१२) उदाहरति सुररिपो इति नन्विति सम्बोधनसूचकमव्ययं हे सुररिपो। कृष्ण! सा सती साध्वी नारी तव पदं नमति।

(१३) भ्गाविति भगौग् भकारो गुरुद्वयञ्चेत्यर्थः तथा च यस्य पादो गुरुलघुलघुगुरुगुरुवर्णघटितः, तत् पङ्क्तिः नाम वृत्तं स्यात्।

(१४) उदाहरति कृष्णेति। कृष्णेन सनाथाः सहिता इत्यर्थः वर्णकानां वत्सानां पङ्क्तिः श्रेणी यामुनकच्छे यमुनातीरे चारु मनोज्ञं यथा तथा चचार।

(१५) सलगैरिति। सलगैः सकारलघुगुरुवर्णैः लघुलघुगुरुलघुगुरुभिर्वर्णैः यस्य पादः भवति, तत् प्रिया नाम वृत्तं स्यादित्यर्थः।

गायत्री। [ ६४ ]

( षड़क्षरा वृत्तिः )

१। त्यौ चेत्तनुमध्या॥ ( १७ )

मूर्त्तिर्मुरशत्रोरत्यद्भुतरूपा।
आस्तां मम चित्ते नित्यं तनुमध्या॥ ( १८ )

नश्यन्ति ददर्श वृन्दानि कपीन्द्रः।
हारीण्यबलानां हारीण्यवलानाम्। ( १९ )

इति भट्टौ। पादान्तत्वेन ददर्श इत्यत्र गुरुत्वम्।

२। शशिवदना न्यौ॥ ( २० )

शशिवदनानां व्रजतरुणीनाम्।
अधरसुधोर्म्मिं मधुरिपुरैच्छत्॥ ( २१ )

३। द्विया सोमराजी॥ ( २२ )

---

(१६) उदाहरति व्रजेति। विलसन्त्यः स्फुरन्त्यः कला नृत्यादिकाश्चतुःषष्टि कामविद्या यासां ताः व्रजसुभुवः व्रजाङ्गनाः सुरवैरिणः कृष्णस्य प्रियाः अभवन्।

(१७) त्याविति। चेत् यदि त्यौ तकारयकारौ गणावित्यर्थः यस्य पादे स्त इति शेषः तत् तनुमध्या नाम वृत्तं स्यात्।

(१८) उदाहरति मूर्त्तिरिति। तनुमध्या कृशमध्या अत्यद्भुतं रूपं सौन्दर्यं यस्यास्तथाभूता सुरशत्रोः कृष्णस्य मूर्त्तिः नित्यं मम चित्ते मनसि आस्ता तिष्ठतु।

(१९) नश्यन्तीति। कपीन्द्रः हनूमान् हारीणि मनोहारीणि हारीणि हारयुक्तानि अवलानां बलरहितानाम् अनाथानामित्यर्थः अबलानां नारीणां वृन्दानि समूहान् ददर्श।

(२०) शशीति। नकारयकारौ यस्य पादे स्त इति शेषः तद्वृत्तं शशिवदना नाम स्यात्।

(२१) उदाहरति शशीति। मधुरिपुः कृष्णः शशिवदनानां चन्द्रमुखीनां व्रजतरुणीनां व्रजयुवतीनां वचनसुधोर्मिं वाक्यामृततरङ्गम् ऐच्छत् इयेष।

(२२) द्वियेति। द्विया यकारद्वयं यस्य पादे भवति तत् सोमराजी नाम वृत्तं स्यात्।

हरे ! सोमराजीसमा ते यशःश्रीः ।
जगन्मण्डलस्य छिनत्त्यन्धकारम् ॥ ( २३ )

४ । मौमः विद्युल्लेखा ॥ ( २४ )

---

उष्णिक् । [ १२८ ]

( सप्ताक्षरा वृत्तिः )

१ । ननगि मधुमती ॥ ( २५ )

रविदुहितृतटे वनकुसुमततिः ।
व्यधित मधुमती मधुमथनमुदम् ॥ ( २६ )

२ । कुमारललिता ज्सगाः ॥ ( २७ )

मुरारितनुवल्ली कुमारललिता सा ।
व्रजैणनयनानां ततान मुदमुच्चैः ॥ ( २८ )

---

(२३) उदाहरति हरे इति। हे हरे! ते तव सोमानां चन्द्राणां राजीसमा सङ्घसदृशी यशसां श्रीः कीर्त्तिसम्पदित्यर्थः जगन्मण्डलस्य त्रिजगत्याः अन्धकारं छिनत्ति नाशयति।

(२४) विद्युल्लेखेति। मौमः मकारद्वयं यस्य पादे भवति तत् विद्युल्लेखा नाम वृत्तं स्यात्।

(२५) न नगीति। न नगि नकारद्वयात् परं गुरुवर्णघटिते पादे सतीत्यर्थः मधुमती नाम वृत्तं स्यात्।

(२६) उदाहरति रवीति। रवेः सूर्य्यस्य या दुहिता कन्या यमुना तस्यास्तटे मधुमती वनकुसुमानां ततिः राजिरित्यर्थः मधुमथनस्य कृष्णस्य मुदं हर्षं व्यधित कृतवतीत्यर्थः।

(२७) कुमारेति। जसगाः जकारसकारगुरुवर्णघटितौ यस्य पादौ भवति तत् कुमारललिता नाम वृत्तं स्यात्।

(२८) उदाहरति मुरारीति। कुमारेण कौमारेण वयसेत्यर्थः ललिता मनोहारिणीत्यर्थः ललितं त्रिषु सुन्दरमित्यमरः। सा प्रसिद्धेत्यर्थः मुरारेः कृष्णस्य

३। म्सौगः स्यान्मदलेखा॥ (२९)

रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा।
लग्नाभून्मुरशत्रौ कस्तूरीरसचर्चा॥ (३०)

अनुष्टुप्॥ [ २५६ ]

(अष्टाक्षरा वृत्तिः)

१। चित्रपदा यदि भौ गौ॥ (३१)

यामुनसैकतदेशे गोपवधूजलकेलौ।
कंसरिपोर्गतिलीला चित्रपदा जगदव्यात्॥ (३२)

२। भात्तलगा माणवकम्॥ (३३)

पञ्चलचूडं चपलैर्वत्सकुलैः केलिपरम्।
ध्याय सखे! स्मेरमुखं नन्दसुतं माणवकम्॥ (३४)

---

तनुवल्ली देहलता व्रजेणनयनानां व्रजरमणीनाम् उच्चैः अतिमात्रां मुदम् आनन्दं ततान विस्तृतवती चकारेत्यर्थः।

(२९) म्साविति। म्सौगः यस्य पादौ मकारसकारगकारघटितः भवति तत् वृत्तं मदलेखा नाम स्यात्।

(३०) उदाहरति। रङ्गे रणाङ्गणे बाहुविरुग्णात् भुजनिर्जितात् दन्तीन्द्रात् गजेन्द्रात् कुवलयापीड़ाख्यादिति भावः मुररिपौ कृष्णे लग्ना संसक्ता मदरेखा दानवारिरेखा कस्तूरीरसचर्चा मृगमदरसाङ्गरागः अभूत् अत्र प्रतीयमानोत्प्रेक्षालङ्कारः कस्तूरीरसस्यावास्तवत्वात्।

(३१) चित्रपदेति। यदि भौ भकारद्वयं गौ गुरुद्वयञ्च पादे स्यात् तदा चित्रपदा नाम वृत्तं स्यात्।

(३२) उदाहरति यामुनेति। यामुनसैकतदेशे यमुनापुलिने इत्यर्थः गोपवधूनां जलकेलौ जलक्रीड़ायां कंसरिपोः कृष्णस्य चित्रं मनोज्ञं पदं पदविन्यासो यत्र तादृशी गतिलीला सविलासा गतिरित्यर्थः जगत् अव्यात् रक्षतु।

(३३) भादिति। भात् भकारात् तलगाः तकारो लघुवर्णगुरुवर्णौ च यस्य पादे भवन्ति तत् माणवकं नाम वृत्तं स्यात्।

(३४) उदाहरति पञ्चलेति। हे सखि! पञ्चला चूड़ा यस्य तादृशं चपलैः चञ्चलैः

मो मो गो गो विद्युन्माला ॥ (३५)

वासोवल्ली विद्युन्माला वर्हश्रेणी शाक्रश्चापः।
यस्मिन् सस्तात् तापोच्छित्त्यै गोमध्यस्थः कृष्णाम्भोदः ॥ (३६)

४। ग्लौ रजौ समानिका तु ॥ (३७)

यस्य कृष्णपादपद्ममस्ति हृत्तड़ागसद्म
धीः समानिका परेण नोचितात्र मत्सरेण ॥ (३८)

५। प्रमाणिका जरौ लगौ ॥ (३९)

पुनातु भक्तिरच्युता सदाच्युताङ्घ्रिपद्मयोः।
श्रुतिस्मृतिप्रमाणिका भवाम्बुराशितारिका ॥ (४०)

---

चरद्भिरित्यर्थः वत्सकुलैः केलिपरं क्रीड़ासक्तं स्मेरमुखं माणवकं बालकं नन्दसुतं कृष्णं ध्याय चिन्तय।

(३५) म इति। यस्य पादे मकारद्वयं गुरुद्वयञ्च भवति तत् विद्युन्माला नाम वृत्तं स्यात्।

(३६) उदाहरति। यस्मिन् कृष्णाम्भोदे वासोवल्ली वसनलता पीताम्बरमित्यर्थः विद्युन्माला, वर्हाणां चूड़ानिहितां मयूरपिच्छानां श्रेणी शाक्रः ऐन्द्रः चापः धनुः, स गोमध्यं गवां धेनुवत्सानां मध्यं गवोर्भूस्वर्गयोर्मध्यञ्च स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्यमरः। तस्मिन् तिष्ठतीति तथोक्तः कृष्णाम्भोदः कृष्णमेघः तापस्य आध्यात्मिकादितापत्रयस्य सन्तापस्य च उच्छित्त्यै उच्छेदाय ध्वंसाय स्तात् भवतु।

(३७) ग्लाविति। यस्य पादे गुरुलघुवर्णौ तदनन्तरं रकारजकारौ चेत् भवत इति शेषः तदा समानिका नाम वृत्तं स्यात् तु पादपूरणार्थमव्ययम्।

(३८) उदाहरति यस्येति। कृष्णस्य पादपद्मं चरणकमलं यस्य हृदयमेव तड़ागः सरः तदेव सद्म आलयो यस्य तादृशम् अथवा हृदयमेव तड़ागः सरः तस्य सद्म नीरं व्याप्य तिष्ठतीति शेषः, अत्र जगति तस्य धीः बुद्धिः मत्सरेण विद्वेषिणा परेण अन्येन जनेन समानिका सदृशी न उचिता वक्तुमिति शेषः। सद्म स्वामन्दिरे नीरे इति मेदिनिः।

(३९) प्रमाणिकेति। यस्य पादे जकाररकारौ तदनन्तरं लघुगुरुवर्णौ स्यातां चेत् तदा तत् प्रमाणिका नाम वृत्तं स्यात्।

मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः॥ (४१)

इति अमरः।

६। नभलगा गजगतिः॥ (४२)

रविसुतापरिसरे विहरतो दृशि हरेः।
व्रजवधूगजगतिर्मुदमलं व्यतनुत॥ (४३)
अवतु वो गिरिसुता शशिभृतः प्रियतमा।
वसतु मे हृदि सदा भगवतः पदयुगम्॥ (४४)

इति कस्यापि।

७। नौ गौ हंसरुतमेतत्॥ (४५)

---

(४०) उदाहरति पुनात्विति। श्रुतिः वेदः स्मृतिः धर्मसंहिता च प्रमाणं यस्याः तादृशी भवः संसार एव अम्बुराशिः समुद्रः तस्मात् तारिका उद्धारकारिणीत्यर्थः अच्युतस्य कृष्णस्य अङ्घ्रिपद्मयोः चरणकमलयोः अच्युता अक्षया सदा सार्वकालिकी भक्तिः पुनातु पवित्रीकरोतु जगदिति शेषः।

(४१) मतल्लिकेति। मतल्लिका मचर्चिका प्रकाण्डम् उद्घः तल्लजः अमूनि पदानि प्रशस्तवाचकानि। शुभावहः शुभजनकः विधिरनुष्ठानम् अय उच्यते इति शेषः।

(४२) नभलगा इति। यस्य पादे नकारभकारौ तदनन्तरं लघुगुरुवर्णौ भवेतां तत् गजगतिः नाम वृत्तं स्यात्।

(४३) उदाहरति रवीति। रविसुतायाः यमुनायाः परिसरे पुलिने इत्यर्थः विहरतः क्रीड़तः हरेः कृष्णस्य दृशि नयने व्रजवधूनां गजगतिः सविलासा गतिरिति भावः अलम् अत्यर्थं मुदम् आनन्दं व्यतनुत अकरोत्।

(४४) अवत्विति। शशिभृतः चन्द्रशेखरस्य हरस्य प्रियतमा गिरिसुता पार्वती वः युष्मान् अवतु रक्षतु, तथा भगवतः नारायणस्य पदयुगं मे मम हृदि सदा वसतु।

(४५) नौ गाविति। यस्य पादे नकारद्वयं तदनु गुरुद्वयञ्च वर्त्तते इति शेषः एतत् हंसरुतं नाम वृत्तं स्यात्।

## बृहती ॥ [ ५१२ ]

### ( नवाक्षरा वृत्तिः )

१ । भुजगशिशुभृता नौ मः ॥ (४६)

ह्रदतटनिकटक्षौणी भुजगशिशुभृता यासीत् ।
मुररिपुदलिते नागे व्रजजनसुखदा साभूत् ॥ (४७)

भृतेत्येवं शम्भुप्रभृतिषु पाठः । वृतेत्येवमाधुनिकाः पठन्ति ।

२ । स्यान्मणिमध्यं चेद्भमसाः ॥ (४८)

कालियभोगाभोगगतस्तन्मणिमध्यस्फीतरुचा ।
चित्रपदाभो नन्दसुतश्चारु ननर्त्त स्मेरमुखः ॥ (४९)

३ । सजरैर्भुजङ्गसङ्गता ॥ (५०)

तरला तरङ्गरिङ्गितैर्यमुना भुजङ्गसङ्गता ।
कथमेति वत्सचारकश्चपलः सदैव तां हरिः ॥ (५१)

---

(४६) भुजगेति । यस्य पादे नकारद्वयं तदनु मकारः स्यात् तत् भुजगशिशुभृता नाम वृत्तं स्यात् ।

(४७) उदाहरति ह्रदेति । या ह्रदस्य कालियाख्यस्य तटनिकटक्षौणी तीरसन्निहितभूमिः भुजगस्य कालियस्य शिशुभिः भृता पूरिता अतएव अगम्येति भाव आसीत् सा भूमिः मुररिपुणा कृष्णेन नागे कालिये दलिते पराभूते इति यावत् सति व्रजजनानां गोपानां सुखदा सुखदायिनी सुखसञ्चारेत्यर्थः अभूत् ।

(४८) स्यादिति । चेत् यदि भकारमकारसकाराः प्रतिपादं स्युः तदा मणिमध्यं नाम वृत्तं स्यात् ।

(४९) उदाहरति कालियेति । कालियस्य नागस्य यः भोगः फणः भोगः सुखस्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः । तस्य आभोगः विस्तारः तद्गतः तत्र स्थित इत्यर्थः तस्य नागस्य यः मणिः फणरत्नं तस्य मध्ये स्फीता या रुक् प्रभा तया चित्रा मनोहारिणी पदयोः आभा दीप्तिर्यस्य तादृशः नन्दसुतः कृष्णः स्मेरम् ईषत् हसत् मुखं यस्य तथाभूतः सन् चारु मनोहरं यथा तथा ननर्त्त ।

(५०) सजरैरिति । सकारजकाररकारैः यस्य पादौ भवति तत् भुजङ्गसङ्गता नाम वृत्तं स्यात् ।

४। रान्नसाविह (हलमुखी)। ॥ (५२)
इति छन्दोमञ्जरीपरिशिष्टे।

५। (भद्रिका) भवति रो नरौ ॥ (५३) इति छ० प०।

६। द्विगुण नगणसहितः सगण इह हि विहितः।
फणिपतिमतिविमला क्षितिप! भवति (कमला) ॥ (५४)
इति छ० प०।

७। अङ्कोन्माना वर्णा यत्र स्युः सर्वे दीर्घाः सर्पेशेनोक्तम्।
(रूपामालीसंज्ञं) तद्वृत्तं यस्मिंश्चेतः केषामुद्वृत्तम् ॥ (५५)
इति छ० प०।

---

(५१) उदाहरति तरलेति। यमुना तरङ्गाणां रिङ्गितैः उद्भवैः तरला चञ्चला तथा भुजङ्गेन कालियेन सङ्गता, अतः वत्सचारकः वत्सपालः चपलः हरिः कृष्णः सदैव सततमेव तां यमुनां कथम् एति गच्छति ?।

(५२) रान्निति। इह छन्दसि रात् रकारात् अनन्तरं नकारसकारौ यस्य पादे स्तः तत् हलमुखी नाम वृत्तं स्यात्।

(५३) भद्रिकेति। यस्य पादे रकारनकाररकाराः स्युः तत् वृत्तं भद्रिका नाम स्यात्।

(५४) द्विगुणेति। हे क्षितिप! राजन्! इह यस्मिं द्विगुणनगणसहितः सगणः नकारनकारसकाराः त्रयो गणा इत्यर्थः विहितः कृतः वर्त्तते पादे इति च शेषः तदा फणिपतिर्नागराजस्य या मतिः तद्वत् विमला निर्मला निर्दोषेत्यर्थः कमला नाम वृत्तं भवति।

(५५) अङ्कोन्माना इति। यत्र वृत्ते सर्वे अङ्कोन्मानाः अङ्कपरिमिता नवेत्यर्थः दीर्घा वर्णाः स्युः पादे इति शेषः। तत् रूपामालीसंज्ञं वृत्तं सर्पेशेन नागराजेन उक्तं यस्मिन् वृत्ते केषां केषाञ्चित् पण्डितानामित्यर्थः चेतः चित्तम् उद्वृत्तम् अधिकरञ्जनत्वेन अभिनिविष्टमित्यर्थः केऽपि पण्डितास्तद्वृत्तमधिकमाद्रियन्ते इति भावः।

## पङ्क्तिः। [ १०२४ ]

### ( दशाक्षरा वृत्तिः )

१। रुक्मवती सा यत्र भमस्गाः॥ (५६)

काय‍मनोवाक्यैः परिशुद्धैर्यस्य सदा कंसद्विषि भक्तिः।
राज्यपदे हर्म्यालिरुदारा रुक्मवती विघ्नः खलु तस्य॥ (५७)

रूपवतीयं क्वचित् क्वचित् चम्पकमाला च।

२। ज्ञेया मत्ता मभसगसृष्टा॥ (५८)

पीत्वा मत्ता मधु मधुपाली कालिन्दीये तटवनकुञ्जे।
उद्दीव्यन्तीर्व्रजजनरामाः कामासक्ता मधुजिति चक्रे॥(५९)

३। त्वरितगतिश्च नजनगैः॥ (६०)

त्वरितगतिर्व्रजयुवतिस्तरणिसुता विपिनगता
मुररिपुणा रतिगुरुणा परिरमिता प्रमदमिता॥ (६१)

---

(५६) रुक्मवतीति। यत्र वृत्ते भमस्गाः भकारमकारसकारेभ्यः परम् एको गुरुः पादे इति शेषः भवति तत् रुक्मवती नाम वृत्तं स्यात्।

(५७) उदाहरति कायेति। यस्य परिशुद्धैः कायमनवाक्यैः कंसद्विषि कृष्णे सदा भक्तिः, तस्य राज्यपदे राज्यमध्ये उदारा महती रुक्मवती काञ्चनमयीत्यर्थः हर्म्यालिः अट्टश्रेणी विघ्नः खलु अन्तराय एव।

(५८) ज्ञेयेति। मभसगसृष्टा प्रतिपादं मकारभकारसकारेभ्यः परं गुरुवर्णेन सृष्टा रचिता या सा मत्ता नाम वृत्तं ज्ञेया।

(५९) उदाहरति पीत्वेति। कालिन्दीये यामुने तटवनकुञ्जे तीरस्थ कानननिकुञ्जे मधुपानां भ्रमराणाम् आली श्रेणिः मधु मद्यं पीत्वा मत्ता अतएव उद्दीव्यन्तीः उच्चैरतिशयेन क्रीड़न्तीरित्यर्थः व्रजजनानां व्रजवासिनां रामाः कान्ताः गोपीरित्यर्थः मधुजिति कृष्णे कामासक्ताः कामरताः चक्रे कृतवती।

(६०) त्वरितगतिरिति। नजनगैः नकारजकारनकारेभ्यः परं गुरुणैकेन वर्णेन प्रतिपादमिति शेषः निर्मितेति च शेषः त्वरितगतिर्नाम वृत्तं स्यात्।

(६१) उदाहरति त्वरितेति। त्वरिता त्वरान्विता गतिर्यस्यास्तादृशी भीता शुकादिति भावः व्रजयुवतिः व्रजाङ्गना तरणिसुतायाः यमुनाया विपिनं वनं गता

क्षितिविजिति स्थितिविहितिव्रतरतय: परगतय: ।
उरु रुरुधुर्गुरु दुधुवुर्युधि कुरव: स्वमरिकुलम् ॥ (६२)
इति दण्डिनि ॥

४ । नरजगैर्भवेन्मनोरमा ॥ (६३)
तरणिजातटे विहारिणी व्रजविलासिनीविलासत: ।
मुररिपोस्तनु: पुनातु व: सुकृतशालिनां मनोरमा ॥ (६४)

५ । म्सौज्गौ (शुद्धविराड़िदं) मतम् ॥ (६५) इति छ० प० ।
६ । म्नौय्गौ चेति (पणव) नामेदम् ॥ (६६) इति छ० प० ।
७ । जौ रगौ (मयूरसारिणी) स्यात् ॥ (६७) इति छ० प० ।

---

रतिगुरुणा सुरताचार्य्येण मुररिपुणा कृष्णेन सह परिरमिता सङ्गता सती प्रमदम् आनन्दम् इता प्राप्ता ।

(६२) क्षितीति । क्षिते: पृथिव्या विजिति: विजय: तया या स्थिति: मर्य्यादा तस्या विहितिर्विधानं स्थापनं तदेव यत् व्रतं नियम: तत्र रतिरनुरागो येषां तथाभूता दुष्टदमनशिष्टपालनरता इत्यर्थ: तथा परा श्रेष्ठा गति: दशा येषां तथाविधा: कुरव: कुरुवंशीया युधिष्ठिरादय इत्यर्थ: युधि: युद्धे स्वम् अरिकुलं शत्रुवर्गम् उरु अत्यर्थं यथा तथा रुरुधु: अवरुद्धवन्त: तथा गुरु अत्यन्तं दुधुवु: कम्पयामासु: ।

(६३) नरजगैरिति । नरजगै: नकाररकारजकाररगणै: गुरुवर्णैकसहितै: यस्य पाद: स्यादिति शेष: तत् मनोरमा नाम वृत्तं स्यात् ।

(६४) उदाहरति तरणीति । तरणिजाया यमुनायास्तटे इत्यर्थ: व्रजविलासिनीनां विलासत: विलासेन विहारिणी सुकृतिनां पुण्यवतां मनोरमा मनोमोहिनी मुररिपो: कृष्णस्य तनु: शरीरं व: युष्मान् पुनातु पवित्रीकरोतु ।

(६५) म्सौ इति । मकारसकारजकारा गणा गुरुश्चैक: यस्य पादे स्यात् तदिदं शुद्धविराट् नाम वृत्तं मतम् ।

(६६) म्नौ इति । मकारनकारयकारा गणा गुरुवर्णश्चैक: यस्य पादे स्यात् तत् इदं पणव नाम वृत्तम् ।

(६७) जाविति । जकारद्वयं रकारो गुरुश्चैक: यस्य पादे भवति, तत् मयूरसारिणी नाम वृत्तं स्यात् ।

८। तौ जौ गुरुणेय (मुपस्थिता)॥ (६८) इति छन्दो० प०।

९। (दीपकमाला) भ्मौ मता जगौ॥ (६९) इति छ० प०।

१०। ज्ञेया (हंसी) मभनगयुता॥ (७०) इति छन्दो० प०।

---

त्रिष्टुप्। (२०४८)

(एकादशाक्षरा वृत्तिर्यथा)

१। स्यादिन्द्रवज्रा यदि तौ ज गौ गः॥ (७१)

गोष्ठे गिरिं सव्यकरेण धृत्वा।
रुष्टेन्द्रवज्राहतिमुक्तवृष्टौ॥
यो गोकुलं गोपकुलञ्च सुस्थं
चक्रे स नो रक्षतु चक्रपाणिः॥ (७२)

---

(६८) तौ जाविति। तकारौ जकारद्वयं गुरुश्चैकः यस्य पादे भवति इयम् उपस्थिता नाम वृत्तं स्यात्।

(६९) दीपकमालेति। भकारमकारजकारा गुरुश्चैकः यस्य पादे भवति तत् दीपकमाला नाम वृत्तं स्यात्।

(७०) ज्ञेयेति। मभनगयुता यस्य पादे मकारभकारनकारास्तदनन्तरं गुरुरेकः, सा हंसी नाम वृत्तं ज्ञेया।

(७१) स्यादिति। यदि तकारद्वयं ततो जकारः ततश्च गुरुद्वयं भवति प्रतिपादमिति शेषः तदा इन्द्रवज्रा नाम वृत्तं स्यात्।

(७२) उदाहरति गोष्ठे इति। यः गोष्ठे रुष्टेन क्रुद्धेन इन्द्रेण वज्राहत्या वज्राघातेन सह मुक्ता या वृष्टिः वर्षं तस्यां सत्यां सव्यकरेण वामहस्तेन गिरिं गोवर्द्धनमित्यर्थः धृत्वा गोकुलं गवां समूहं गोपकुलं गोपानां समूहञ्च सुस्थं निरापदमित्यर्थः चक्रे कृतवान् स चक्रपाणिः कृष्णः नः अस्मान् रक्षतु। पुरा वृष्ट्यर्थिनो गोपाः प्रत्यब्दम् इन्द्रोत्सवं कुर्वन्ति स्म। परं कृष्णवचनात् तमकृत्वा गोवर्द्धनयाचायां कृतायां देवराजोऽतिक्रुद्धः सप्ताहं महता वृष्टिपातेन गोकुलं प्लावयामास। तदवलोक्य कृष्णो गोवर्द्धनधारणेन गोकुलं ररक्षेति गाथा।

२। उपेन्द्रवज्रा प्रथमे लघौ सा॥ (७३)

उपेन्द्र! वज्रादिमणिच्छटाभिः
विभूषणानां छुरितं वपुस्ते।
स्मरामि गोपीभिरुपास्यमानं
सुरद्रुमूले मणिमण्डपस्थम्॥ (७४)

३। अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः॥
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम॥ (७५) (१४ भेदाः)

ममवाच्युतचरिते यथा—

काचिन्मुरारेर्वदनारविन्दं
संक्रान्तमालोक्य जले नवोढ़ा।
व्यक्तं सलज्जा परिचुम्बितुं तत्
तदर्थमेवाम्भसि निर्ममज्ज॥ (७६)

---

(७३) उपेन्द्रेति। प्रथमे वर्णे इति शेषः लघौ सतीत्यर्थः ततश्च जकारतकारजकारा गणास्तदनु गुरुद्वयञ्चेत् तदा उपेन्द्रवज्रा नाम वृत्तं स्यात्।

(७४) उदाहरति उपेन्द्रेति। हे उपेन्द्र! कृष्ण! सुरद्रुमूले देवतरुतले मणिनिर्मितं यत् मण्डपं मन्दिरं तत्र तिष्ठतीति तथोक्तं विभूषणानाम् अलङ्काराणां वज्रं हीरकम् आदि येषां तथोक्तानां मणीनां रत्नानां विभूषणस्थानामिति भावः छटाभिः प्रभाभिः छुरितं रञ्जितं तथा गोपीभिः उपास्यमानं सेव्यमानं ते तव वपुः शरीरं स्मरामि।

(७५) अनन्तरोदीतितेति। यदीयौ यस्य वृत्तस्य सम्बन्धिनौ पादौ चरणद्वयम् अनन्तरम् उदीरितयोरुक्तयोः इन्द्रवज्रोपेन्द्रवज्रयोरित्यर्थः लक्ष्मभाजौ लक्षणाक्रान्तौ ता उपजातयः नाम वृत्तानि। अन्यासु अपि मिश्रितासु उभयलक्षणयुक्तासु इत्यर्थः जातिषु वृत्तिषु इदमेव उपजातिरित्येव नाम। उपजातिनाम्ना ता जातयो व्यवदिश्यन्ते इति भावः।

(७६) उदाहरति काचिदिति। काचित् नवोढ़ा कान्ता मुरारेः कृष्णस्य तट-

मुखारविन्दैर्व्रजसुन्दरीणाम्
आमोदमत्युत्कटमुद्गिरद्भिः।
अहारि चित्तेन समं मुरारेः
हैमाम्बुजेभ्योऽपि मधुव्रतौघः॥ (७७)

तोयेषु तस्याः प्रतिबिम्बितासु
व्रजाङ्गनानां नयनावलीषु।
स्वबन्धुपङ्क्तिभ्रमतोऽतिमुग्धा
गोष्ठीं शफर्यो रचयाम्बभूवुः॥ (७८)

तथा ममैव गोपालशतके,—

वनेषु कृत्वा सुरभिप्रचारं
प्रकाममुग्धो मधुवासरेषु।

---

स्थितस्येति भावः वदनारविन्दं मुखकमलं जले सङ्क्रान्तं प्रतिबिम्बितम् आलोक्य व्यक्तं प्रकाशं तत् मुखकमलं परिचुम्बितुं सलज्जा लज्जमाना तदर्थमेव तच्चुम्बनार्थमेव अम्भसि जले निममज्ज निमग्नवती। अत्र पादत्रये इन्द्रवज्रालक्षणं चतुर्थे तु पादे उपेन्द्रवज्रालक्षणं द्रष्टव्यम्।

(७७) मुखारविन्दैरिति। अत्युत्कटम् अतिमनोहारि आमोदं सौरभम् उद्गिरद्भिः उद्गमद्भिः व्रजसुन्दरीणां मुखारविन्दैः वदनकमलैः हैमाम्बुजेभ्यः स्वर्णपद्मेभ्यः अपि तत्र सौरभाभावादिति भावः मधुव्रतानां भ्रमराणां ओघः सङ्घः मुरारेः कृष्णस्य चित्तेन मनसा समम् अहारि हृतः आकृष्ट इत्यर्थः व्रजाङ्गनामुखानि दृष्ट्वा पद्मभ्रान्त्या भ्रमरा यथा आकृष्टा आसन् कृष्णोऽपि तथैव आकृष्टोऽभूदिति फलितार्थः। अत्र प्रथमे तृतीये च उपेन्द्रवज्रालक्षणं द्वितीये चतुर्थे तु इन्द्रवज्रालक्षणमिति द्रष्टव्यम्।

(७८) तोयेष्विति। तस्या यमुनायाः तोयेषु सलिलेषु व्रजाङ्गनानां जलविहारिणीनामिति भावः नयनावलीषु नेत्रपङ्क्तिषु प्रतिबिम्बितासु सतीषु अतिमुग्धाः अतिसरलाः अज्ञा इति यावत् शफर्यः तदाख्य क्षुद्रमत्स्यविशेषाः स्वबन्धूनां सजातीयानामित्यर्थः या पङ्क्तिः श्रेणी तत्र यो भ्रमः नयनेषु शफरीभ्रान्तिरित्यर्थः तस्मात् तेन वा गोष्ठीं सभां रचयाम्बभूवुः बह्वः समिता इति भावः। अत्र प्रथमे चतुर्थे च इन्द्रवज्रालक्षणं द्वितीये तु उपेन्द्रवज्रालक्षणं द्रष्टव्यमिति।

गायन् कलं क्रीड़ति पद्मिनीषु
मधूनि पीत्वा मधुसूदनोऽसौ ॥ (७९)

एवमनयोर्नानाविधा अप्युपजातयो बोद्धव्याः।
तथा वंशस्थविलेन्द्रवंशयोरित्थमुदाहार्य्यम् ॥

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः।
प्रस्थानकालक्षमवेशकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ (८०) इति माघे।

४। न ज ज ल गै गदिता सुमुखी। (८१)

तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः।
तिमिरमुदस्य मुखं सुमुखी हरिमवलोक्य चुचुम्ब चिरम् ॥ (८२)

---

(७९) वनेष्विति। मधुवासरेषु वसन्तदिवसेषु प्रकामम् अतिमात्रं यथा तथा मुग्धः सुन्दरः मोहनमूर्त्तिरिति भावः असौ मधुसूदनः कृष्णः वनेषु सुरभिप्रचारं गोचारणं कृत्वा पद्मिनीषु कमलिनीषु तदाख्यकामिनीविशेषेषु च मधूनि एकत्र पौष्पाणि अन्यत्र अधरामृतानि पीत्वा कलं मधुरं गायन् क्रीड़ति विहरति। अत्र प्रथमद्वितीयचतुर्थपादेषु उपेन्द्रवज्रालक्षणं तृतीये तु इन्द्रवज्रालक्षणम्।

(८०) इत्थमिति। इत्थम् एवंविधे प्रगे प्रातःकाले सायं सायं प्रगे प्रातरित्यमरः। अथ सूर्य्योदयानन्तरं रथाश्वेभनिषादिनां रथिनां सादिनां हस्त्यारोहिणामित्यर्थः नृपाणां राज्ञां गणः तोरणात् बहिर्द्वारात् बहिः तोरणोऽस्त्री बहिर्द्वारमित्यमरः। प्रस्थानकालस्य प्रयानकालस्य क्षमः योग्यः यः वेशः परिच्छदः तस्य कल्पनया रचनया कृतः क्षणक्षेपः कालविलम्बः येन तादृशम् अच्युतं कृष्णम् उदैक्षत प्रतीक्षाञ्चक्रे इत्यर्थः। अत्र प्रथमतृतीययोरिन्द्रवंशालक्षणं द्वितीयचतुर्थयोस्तु वंशस्थवृत्तलक्षणं द्रष्टव्यम्।

(८१) नजेति। नजजलगैः नकारजकारजकारैश्च परं लघुरेकः गुरुरेकः यस्य पादे भवति तत् वृत्तं सुमुखी नाम गदिता उक्ता।

(८२) उदाहरति तरणिसुतेति। तरणिसुतायाः यमुनायाः तटे यत् कुञ्जं तदेव गृहं तस्मिन् काचित् सुमुखी रमणी वदनमेव विधुः चन्द्रः तस्य स्मितान्येव

५। मात्तौ गौ चेच्छालिनी वेदलोकैः॥ (८३)

अंहो हन्ति ज्ञानवृद्धिं विधत्ते
धर्म्मं धत्ते काममर्थञ्च सूते।
मुक्तिं दत्ते सर्वदोपास्यमाना
पुंसां श्रद्धाशालिनी विष्णुभक्तिः॥ (८४)

६। वातोर्मीयं गदिता म्भौ त गौ मः॥ (८५)

ध्याता मूर्त्तिः क्षणमप्यच्युतस्य
श्रेणी नाम्नां गदिता हेलयापि।
संसारेऽस्मिन् दुरितं हन्ति पुंसां
वातोर्मी पोतमिवाम्भोधिमध्ये॥ (८६)

७। मो गो नौ गो भ्रमरविलसिता॥ (८७)

---

दीधितयः किरणाः तैः तिमिरम् अन्धकारं निरस्य निराकृत्य हरिं कृष्णम् अवलोक्य मुखम् अन्धकारैरलक्षितमिति भावः चिरं चुचुम्ब चुम्बितवती।

(८३) मेति। मात् मगणात् अनन्तरं तगणद्वयं गुरुद्वयञ्च चेत् यदि भवति तदा शालिनी नाम वृत्तं स्यात् तत्र वेदे चतुर्थवर्णे तदनु लोके सप्तमे च वर्णे यतिर्भवतीत्यर्थः।

(८४) उदाहरति अंह इति। सर्वदा सर्वस्मिन् काले उपास्यमाना क्रियमाणेत्यर्थः पुंसां श्रद्धाशालिनी श्रद्धान्विता सविश्वासेत्यर्थः विष्णौ भक्तिः अनुरागः अंहः पापं हन्ति नाशयति, ज्ञानवृद्धिं विधत्ते करोति धर्मं धत्ते जनयति, काम्यते इति कामः सुखं तम् अर्थञ्च सुखसाधनमिति शेषः सूते जनयति मुक्तिं दत्ते ददाति च।

(८५) वातोर्मीयमिति। मगणभगणतगणेभ्यः परं गुरुद्वयं यस्य पादे स्यात् इयं वातोर्मी नाम वृत्तं गदिता उक्ता।

(८६) उदाहरति ध्यातेति। अम्भोधिमध्ये समुद्रमध्ये वातोर्मी सवाततरङ्ग इत्यर्थः पोतम् अर्णवयानमिव क्षणमपि ध्याता चिन्तिता अच्युतस्य कृष्णस्य मूर्त्तिः, हेलयापि अश्रद्धयापीत्यर्थः गदिता उच्चारिता नाम्नां श्रेणी चेति अध्याहार्य्यम् अस्मिन् संसारे पुंसां दुरितं पापं हन्ति नाशयति।

भ्रमरविलसितं क्वापि।
मुग्धे ! मानं परिहर न चिरात्
तारुण्यन्ते सफलयतु हरि:।
फुल्ला वल्ली भ्रमरविलसिता-
भावे शोभां कलयति किमु ? ताम्॥ (८८)

८। स्यादनुकूला भ त न ग गाश्चेत्॥ (८९)

वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाक्षीकृतरतिपूर्त्ति:।
वाञ्छितसिद्धै प्रणतिपरस्य स्यादनुकूला जगति न कस्य॥(९०)

९। रान्नरैर्नरलगैरथोद्धता॥ (९१)

राधिका दधिविलोड़नस्थिता
कृष्णवेणुनिनदैरथोद्धता।

---

(८७) म इति। यस्य पादे मगणात् परं गुरुवर्ण:, तदनु नकारो गुरुश्च भवति तत् भ्रमरविलसिता भ्रमरविलसितं वा नाम वृत्तं स्यात्।

(८८) उदाहरति मुग्धे इति। हे मुग्धे ! मूढ़े ! राधे इति शेष: न चिरात् शीघ्रं मानं कोपं परिहर त्यज, हरि: कृष्ण: ते तव तारुण्यं यौवनं सफलयतु कृतार्थं करोतु। फुल्ला विकसिता वल्ली लता भ्रमरविलसितानां मधुकरविलासानाम् अभावे तां तथाविधां शोभां कलयति प्राप्नोति किमु ? नैव प्राप्नोतीत्यर्थ:।

(८९) स्यादिति। चेत् यदि पादे भतनगणेभ्य: परं गुरुद्वयं भवति तदा अनुकूला नाम वृत्तं स्यात्।

(९०) उदाहरति वल्लवेति। वल्लववेशा गोपवेशा गोपानां मृगाक्षीभि: कान्ताभि: कृता रतिपूर्त्ति: क्रीड़ातिशयो यया तथाविधा मुररिपो: कृष्णस्य मूर्त्ति: अनुकूला सदया सती जगति प्रणतिपरस्य प्रणतस्य कस्य जनस्य वाञ्छितसिद्धै अभीष्टसाधनाय न स्यात्, सर्वस्यैव स्यादित्यर्थ:।

(९१) रादिति। रात् रगणात् परै: अनन्तरवर्त्तिभि: नरलगै: नगणरगणलघुगुरुभि: प्रतिपादं स्थितैरिति शेष: रथोद्धता नाम वृत्तं स्यात्। केचिदथ अनन्तरम् उद्धता नाम वृत्तं स्यादित्याहु:।

यामुनं तटनिकुञ्जमञ्जसा
सा जगाम सलिलाहृतिच्छलात्॥ (९२)

१०। स्वागता र न भ गैर्गुरुणा च॥ (९३)

यस्य चेतसि सदा मुरवैरी वल्लवीजनविलासविलोलः।
तस्य नूनममरालयभाजः स्वागतादरकरः सुरराजः॥ (९४)

११। दोधकमिच्छति भत्रितयाद्गौ॥ (९५)

देव! सदोध कदम्बतलस्थ! श्रीधर! तावकनामपदं मे।
कण्ठतलेऽसुविनिर्गमकाले स्वल्पमपि क्षणमेष्यति योगम्॥(९६)

१२। स्यान्मोटनकं त ज जाश्च ल गौ॥ (९७)

---

(९२) उदाहरति। दधिविलोड़नस्थिता दधि विलोड़यन्तीत्यर्थः सा राधिका अथ कृष्णस्य वेणुनिनदैः वंशीरवैः उद्गता अधीरा सती अञ्जसा झटिति सलिलाहृतिच्छलात् जलानयनव्याजेन यामुनं यमुनासम्बन्धि तटनिकुञ्जं जगाम।

(९३) स्वागतेति। यस्य पादे रगणनगणभगणेभ्यः परं गुरुद्वयं तत् स्वागता नाम वृत्तं स्यात्।

(९४) उदाहरति यस्येति। वल्लवीजनानां गोपाङ्गनानां विलासे विहारे विलोलः चपलः मुरवैरी कृष्णः यस्य चेतसि मनसि सदा सततं वर्त्तते इति शेषः नूनं निश्चितं सुरराजः इन्द्रः अमरालयभाजः स्वर्गगतस्य तस्य जनस्य स्वागतेन आद्रियते इति स्वागतादरः करो यस्य तथाभूतः भवतीति शेषः देवराजस्तं कृष्णभक्तं जनं स्वर्गगतं स्वागतप्रश्नेनाद्रियते इत्यर्थः।

(९५) दोधकमिति। यस्य पादे भत्रितयात् भगणत्रयात् गौ गुरुद्वयं भवतः, तत् वृत्तं दोधकं नाम इच्छति बुध इति शेषः।

(९६) उदाहरति देवेति। हे सदोध सवत्स देव! वत्सः शक्रत् करिदोग्धा दोधको दोध इत्यपीति शब्दरत्नावली। हे कदम्बतलस्थ श्रीधर! तावकनामपदं तव कृष्णेति नाम इत्यर्थः मे मम असुविनिर्गमकाले प्राणप्रयाणसमये स्वल्पं क्षणमपि कण्ठतले योगम् एष्यति प्राप्स्यति?।

(९७) स्यादिति। यस्य पादे तजजाः गणाः तदनु लघुरेकः गुरुश्चैकः, तत् मोटनकं नाम वृत्तं स्यात्।

रङ्गे खलु मल्लकलाकुशलश्चाणूरमहाभटमोटनकम्।
यः केलिलवेन चकार स मे संसाररिपुं परिमोटयतु॥ (९८)

१३। श्येन्युदीरिता रजौ रलौ गुरुः॥ (९९)

यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा।
जाह्नवीव विश्ववन्द्यविभ्रमा तं भजामि भावगम्यमच्युतम्(१००)

१४। नन सग गुरु रचिता (वृत्ता)॥ (१०१) इति छ० प०।

१५। नन रलगुरुभिश्च (भद्रिका)॥ (१०२) इति छ० प०।

१६। (उपस्थित) मिदं जसौ ताद्गकारौ॥(१०३) इति छ०प०।

(शिखण्डित) मिदं जसौ तगौ गुरुश्चेत्॥ इति छ०प०

१७। (उपचित्र) मिदं सससाल्लगौ॥ (१०४) इति छ० प०।

---

९८) उदाहरति रङ्गे इति। रङ्गे युद्धे मल्लस्य कला क्रीड़ा मल्लकला बाहुयुद्धमित्यर्थः तत्र कुशलः निपुणः यः कृष्णः केलिलवेन अवलीलया चाणूरो नाम कश्चित् कंसचरः, स एव महाभटः महावीरः तस्य मोटनकं विनाशं चकार, स कृष्णः मे मम संसार एव रिपुः तं परिमोटयतु नाशयतु।

(९९) श्येनीति। यस्य पादे रजौ रगणजगणौ ततः रलौ रगणो लघुश्च तदनु गुरुरेकश्च भवति तत् वृत्तं श्येनी नाम उदीरिता उक्ता।

(१००) उदाहरति यस्येति। यस्य अच्युतस्य कीर्त्तिः जाह्नवीव गङ्गेव इन्दुः चन्द्रः कुन्दं माघ्यपुष्पविशेषः चन्दनञ्च तद्वत् श्येनी शुभ्रा सदा अशेषलोकपावनी सर्वलोकपवित्रकारिणी तथा विश्वैर्जगद्भिः वन्द्यः विभ्रमः विलासः यस्यास्तादृशी, तं भावगम्यं भक्तिलभ्यम् अच्युतं कृष्णं भजामि।

(१०१) ननेति। यस्य पादे नगणद्वयं ततः सगणः तदनु गुरुद्वयं भवति तत् वृत्तं वृत्ता नाम रचिता कथिता।

(१०२) ननेति। यस्य पादे नद्वयं ततो रकारः तदनु लघुगुरुवर्णौ भवतः तत् भद्रिका नाम वृत्तं स्यात्।

(१०३) उपस्थितमिति। जगणसगणतगणाः ततो गुरुद्वयञ्चेत् तदा इदं वृत्तम् उपस्थितं नाम स्यात्। केचित् शिखण्डितमिदं वदन्ति।

(१०४) उपचित्रमिति। यस्य पादे सगणत्रयं ततो लघुर्गुरुश्चैकः, इदम् उपचित्रं नाम वृत्तम्।

१८। (कुपुरुषजनिता) ननौ गौंगः ॥ (१०५) इति छ० प०।

१९। (अनवसिता) न्यौ भ्गौ गुरुरन्ते ॥ (१०६) इति छ०प०

२०। (विध्वङ्कमाला) भवेत्तौ तगौ गः ॥ (१०७) इति छ०प०

२१। (सान्द्रपदं) स्याद् भतनगलैश्च ॥ (१०८) इति छ० प०।

---

## जगती। [ ४०९६ ]

### ( द्वादशाक्षरा वृत्तिः )

१। चन्द्रवर्त्म निगदन्ति र न भ सैः ॥ ॥ (१०९)

चन्द्रवर्त्म पिहितं घनतिमिरैः
राजवर्त्म रहितं जनगमनैः।
इष्टवर्त्म तदलङ्कुरु सरसे!
कुञ्जवर्त्मनि! हरिस्तव कुतुकी ॥ (११०)

---

(१०५) कुपुरुषेति। यस्य पादे नगणद्वयं ततो रकारः तदनु गुरुद्वयं, सा कुपुरुषजनिता नाम वृत्तम्।

(१०६) अनवसितेति। यस्य पादे नकारयकारभकारगणेभ्यः परं गुरुद्वयं, सा अनवसिता नाम वृत्तं स्यात्।

(१०७) विध्वङ्कमालेति। यस्य पादे तगणत्रयं ततो गुरुद्वयं भवति, सा विध्वङ्कमाला नाम वृत्तं स्यात्।

(१०८) सान्द्रपदमिति। यस्य पादे भतनगणेभ्यः परं गुरुरेको लघुश्चैकः भवति, तत् वृत्तं सान्द्रपदं नाम स्यात्।

(१०९) चन्द्रवर्त्मेति। रनभसैः गणैः यस्य पादो भवति तत् चन्द्रवर्त्म नाम वृत्तं निगदन्ति।

(११०) उदाहरति चन्द्रवर्त्मेति। हे सरसे रसवति राधे! घनतिमिरैः गाढान्धकारैः चन्द्रस्य वर्त्म पन्थाः पिहितम् आवृतं जनानां गमनैः राजवर्त्म राजपथः जनगमनैः रहितं साम्प्रतं जना राजपथं न गच्छन्तीति भावः, तत् तस्मात् इष्टस्य प्रियस्य वर्त्म पन्थानं येन प्रियः प्रस्थितः तदित्यर्थः अलङ्कुरु शोभय स्वगत्येति

२। वदन्ति वंशस्थविलं ज तौ जरौ ॥ (१११)

विलासवंशस्थविलं सुखानिलैः
प्रपूर्य्य यः पञ्चमरागमुद्गिरन्।
व्रजाङ्गनानामपि गानशालिनां
जहार मानं स हरिः पुनातु नः॥ (११२)

वंशस्तनितमिति क्वापि।

३। तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ॥ (११३)

दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः
पीताम्बरोऽसौ जगतां तमोपहः।
यस्मिन् ममज्जुः शलभा इव स्वयं
ते कंसचाणूरमुखा मखद्विषः॥ (११४)

---

शेषः यतः हरिः कृष्णः कुञ्जवर्त्मनि कुञ्जमार्गे कुतुकी औत्सुक्यवानित्यर्थः सन् तिष्ठतीति शेषः।

(१११) वदन्तीति। यस्य पादे नतौ जगणतगणौ जरौ जगणरगणौ च स्यातां तत् वंशस्थविलं नाम वृत्तं स्यात्।

(११२) उदाहरति विलासेति। यः सुखानिलैः वदनवायुभिः विलासवंशे क्रीड़ावेणौ तिष्ठतीति तथोक्तं विलं छिद्रं प्रपूर्य्य वेणुमाध्मायेत्यर्थः पञ्चमरागम् उद्गिरन् व्रजाङ्गनानां गोपीनां गानशालिनां गायकानामपि अन्येषामिति शेषः मानं कोपम् अहङ्कारञ्च जहार हृतवान् स हरिः कृष्णः नः अस्मान् पुनातु पवित्रीकरोतु।

(११३) तच्चेन्द्रेति। प्रथमाक्षरे गुरौ सति पादे ततजरगणेषु सत्स्विति भावः तद्वृत्तम् इन्द्रवंशा नाम स्यात्।

(११४) उदाहरति दैत्येन्द्रेति। असौ पीताम्बरः कृष्णः उदीर्णा उद्दीप्ता दीधितयः किरणाः देहप्रभाः प्रतापा वा यस्य तथोक्तः दैत्येन्द्राणां वंशे अग्निः अनलस्वरूप इत्यर्थः अतएव जगतां तमोपहः तिमिरनाशकः एकत्र देहप्रभया अन्यत्र दैत्यध्वंसिप्रतापेनेति भावः। यस्मिन् पीताम्बरे अग्नौ इव प्रसिद्धाः कंसचाणूरमुखाः कंसचाणूरप्रभृतयः मखद्विषः यज्ञविघातकाः असुरा इत्यर्थः शलभा इव पतङ्गा इव स्वयं ममज्जुः निमग्ना बभूवुः।

४। ज सौ जसयुतौ जलोद्धतगतिः ॥ (११५)

यदीयहलतो विलोक्य विपदं
कलिन्दतनया जलोद्धतगतिः।
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥ (११६)

सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥ (११७) इति भारवौ ॥

५। भुजङ्गप्रयातं चतुर्भिर्यकारैः (११८)

सदारात्मजज्ञातिभृत्यौ विहाय
स्वमितं क्षुद्रं जीवनं लिप्समानः।

---

(११५) जसाविति। यस्य पादे जसयुतौ जसौ जगणसगणौ पुनश्च जगणसगणौ स्तः, तद्वृत्तं जलोद्धतगतिर्नाम स्यात्।

(११६) उदाहरति यदीयेति। यदीयहलतः यस्य हलात् विपदं विलोक्य विविच्येत्यर्थः कलिन्दस्य सूर्यस्य तनया यमुनेत्यर्थः जलैः उद्धता गतिः यस्यास्तादृशी सती सहसा विलासविपिनं क्रीड़ावनं विवेश, स हली हलधरः बलदेव इत्यर्थः जगतां कुशलं मङ्गलं करोतु। कदाचित् मधुपानमत्तः बलदेवः गोपाङ्गनाभिर्जलक्रीड़ां कुर्वन् यमुनामाहूतवान्। सा तु हलेनाकर्षणभयात् तस्य विलासकाननमगमदिति भागवतम्।

(११७) सनाकेति। सनाकवनितं नाकवनिताभिः सुरनारीभिः सह वर्त्तमानं सुरनार्य्योऽत्र वसन्तीति भावः नितम्बैः कटकैः कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः। रुचिरं मनोहरं सुनिनदैः शोभनस्वनैः नदैः जलप्रवाहैः वृतम् अमुं गिरिं रसपरा अतिसुरसेत्यर्थः परास्तवसुधा त्यक्तभूलोका अवतः रचकस्य फणवतः नागराजस्य मता इष्टा सुधा अधिवसति अधितिष्ठति।

(११८) भुजङ्गेति। चतुर्भिः यकारैः यगणैः यस्य पादो भवतीति शेषः, इदं भुजङ्गप्रयातं नाम वृत्तं स्यात्।

मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयातं द्रुतं सागराय ॥ (११९)

६। वद तोटकमब्धिसकारयुतम् ॥ (१२०)

यमुनातटमच्युतकेलिकला
लसदङ्घ्रिसरोरुहसङ्गरुचिम्।
मुदितोऽट कलेरपनेतुमघं
यदि चेच्छसि जन्म निजं सफलम् ॥ (१२१)

७। कीर्त्तितैषा चतूरेफिका स्रग्विणी ॥ (१२२)

इन्द्रनीलोपलेनेव या निर्म्मिता
शातकुम्भद्रवालङ्कृता शोभते।
नव्यमेघच्छविः पीतवासा हरेः
मूर्त्तिरास्तां जयायोरसि स्रग्विणी ॥ (१२३)

---

(११९) उदाहरति मयेति। कृष्णस्य कालियं प्रत्युक्तिः। हे कालियभुजङ्ग ! त्वं मया इत्थम् अनेन प्रकारेण क्लेशितः क्लेशं प्रापितः निर्जित इत्यर्थः। अतः जीवनं लिप्समानः लब्धुमिच्छन् यदीति शेषः तदा दारा भार्य्याः आत्मजाः पुत्राः ज्ञातयः स्वजनाः भृत्या दासाश्च तैः सहितः स्वं स्वकीयम् एतं ह्रदं कालियाख्य-मिति भावः विहाय परित्यज्य द्रुतं शीघ्रं सागराय प्रयातं प्रस्थानं कुरु।

(१२०) वदेति। अब्धिसकारयुतं सगणचतुष्टययुतं प्रतिपादमिति शेषः तोटकं नाम वृत्तं स्यात्।

(१२१) उदाहरति यमुनेति। यदि निजं जन्म सफलम् इच्छसि कर्त्तुमिति शेषः तदा कलेः अधर्ममययुगस्य अघं पापम् अपनेतुं खण्डयितुं मुदितः हृष्टः सन् अच्युतस्य कृष्णस्य केलिकलया क्रीड़ानृत्यादिना लसतोः चलतोः अङ्घ्रिसरो-रुहयोः पादपद्मयोः सङ्गेन रुचिः शोभा यस्य तथाभूतं यमुनातटम् अट गच्छ।

(१२२) कीर्त्तितेति। चतूरेफिका रगणचतुष्टयवती प्रतिपादमिति शेषः एषा स्रग्विणी नाम वृत्तं कीर्त्तिता।

(१२३) उदाहरति इन्द्रेति। या नव्यमेघच्छविः नवनीरदवर्णा पीतवासा हरेः कृष्णस्य मूर्त्तिः इन्द्रनीलोपलेनेव नीलकान्तमणिनेव निर्मिता शातकुम्भद्रवा-

८। वाणाश्वैश्छिन्ना वैश्वदेवी म मौ यौ॥ (१२४)

अर्चामन्येषां त्वं विहायामराणाम्
अद्वैतेनैकं विष्णुमभ्यर्च भक्त्या।
तत्राशेषात्मन्यर्चिते भाविनी ते
भ्रातः! सम्पन्नाराधना वैश्वदेवी॥ (१२५)

९। प्रमिताक्षरा स ज स सैः कथिता॥ (१२६)

अमृतस्य शीकरमिवोद्गिरती
रदमौक्तिकांशुलहरी छुरिता।
प्रमिताक्षरा मुररिपोर्भणितिः
व्रजसुभ्रुवामभिजहार मनः॥ (१२७)

---

लङ्कृता काञ्चनरसरञ्जितेव च शोभते, सा उरसि वक्षसि स्रग्विणी मालिनी मूर्त्तिः जयाय मङ्गलाय आस्तां भवतु। जयायेत्यत्र ममैवेति पाठान्तरम्।

(१२४) वाणाश्वैरिति। यस्य पादे ममौ मगणौ यौ यगणौ च स्यातां सा वाणाश्वैः पञ्चमसप्तमवर्णैः छिन्ना विच्छेदवतीत्यर्थः वैश्वदेवी नाम वृत्तं स्यात्।

(१२५) उदाहरति अर्चामिति। हे भ्रातः! त्वम् अन्येषाम् अमराणां देवानाम् अर्चां पूजां विहाय त्यक्त्वा अद्वैतेन एकमेवाद्वितीयं ब्रह्मेति बुद्ध्या भक्त्या एकमद्वितीयं विष्णुम् अभ्यर्च आराधय, तत्र अशेषात्मनि विश्वात्मनि कृष्णे अर्चिते आराधिते ते तव वैश्वदेवी सर्वदेवसम्बन्धिनी आराधना सम्पन्ना सिद्धा भाविनी भविष्यतीत्यर्थः सर्वं विष्णुमयं जगदिति शास्त्रेण कृष्णस्य सर्वदेवमयत्वप्रतिपादनादिति भावः।

(१२६) प्रमितेति। सजससैः गणैः यस्य पादो भवति तत् वृत्तं प्रमिताक्षरा नाम कथिता।

(१२७) उदाहरति अमृतस्येति। अमृतस्य शीकरं कणम् उद्गिरती अतिमधुरेत्यर्थः रदा दन्ता एव मौक्तिकानि तेषाम् अंशुलहरीभिः किरणसङ्घैः छुरिता रञ्जिता प्रमितानि परिमितानि स्वल्पानीत्यर्थः अक्षराणि यस्यां तथाभूता मुररिपोः कृष्णस्य भणितिः वाणी व्रजसुभ्रुवां गोपाङ्गनानां मनः अभिजहार हृतवती।

प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभूत्
न पतिष्यतः करसहस्रमपि ॥ (१२८) इति माघे ॥

१०। द्रुतविलम्बितमाह न भौ भ रौ ॥ (१२९)

तरणिजापुलिने नववल्लवी-
परिषदा सह केलिकुतूहलात्।
द्रुतविलम्बितचारुविहारिणं
हरिमहं हृदयेन सदा वहे ॥ (१३०)

११। न न र र घटिता तु मन्दाकिनी ॥ (१३१)

बलिदमनविधौ बभौ सङ्गता
पदजलरुहि यस्य मन्दाकिनी।

---

(१२८) प्रतिकूलतामिति। विधौ दैवे चन्द्रे च प्रतिकूलतां विपचताम् एकत्र बाधकत्वम् अन्यत्र उदयोन्मुखत्वमित्यर्थः उपगते प्राप्ते सति बहुसाधनता बह्वुपायशालित्वमित्यर्थः विफलत्वं निष्फलत्वम् एति प्राप्नोति। तथा हि करसहस्रमपि किरणसहस्रमपि हस्तसहस्रमपि च पतिष्यतः पतनोन्मुखस्येत्यर्थः दिनभर्त्तुः दिवाकरस्य अवलम्बनाय आश्रयाय न अभूत्।

(१२९) द्रुतेति। यस्य पादे नभौ गणौ तदनु भरौ च गणौ स्तः, तत् वृत्तं द्रुतविलम्बितम् आह ब्रवीति बुध इति शेषः।

(१३०) उदाहरति तरणिजेति। अहं सदा सर्वस्मिन् काले हृदयेन मनसा तरणिजा यमुना तस्याः पुलिने सैकते नववल्लीपरिषदा व्रजतरुणीसङ्घेनेत्यर्थः सह केलिकुतूहलात् क्रीड़ाकौतुकात् द्रुतं शीघ्रं विलम्बितञ्च यथा तथा चारु मनोज्ञं विहरतीति तथोक्तं हरिं कृष्णं वहे धारयामि चिन्तयामीत्यर्थः।

(१३१) ननेति। ननररघटिता, नयुगलात् परं रयुगलं यस्य पादे स्यात् तद्वृत्तं मन्दाकिनी नाम स्यादित्यर्थः।

(१३२) उदाहरति बलीति। बलिदमनविधौ बलेः असुरराजस्य दमनविधौ शासनव्यापारे यस्य पदजलरुहि पादपद्मे सङ्गता स्थिता मन्दाकिनी गङ्गा सुरैः

सुरनिहितसिताम्बुजस्रङ्निभा
हरतु जगदघं स पीताम्बरः॥ (१३२)
सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम्।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ सविस्मयम्॥ (१३३)
इति भारवौ॥
अतिसुरभिरभाजि पुष्पश्रियाम्
अतनुतरतयेव सन्तानकः।
तरुणपरभृतः स्वनं रागिणाम्
अतनुत रतये वसन्तानकः॥ (१३४) इति माघे॥

१२। न य सहितौ न्यौ कुसुमविचित्रा॥
विपिनविहारे कुसुमविचित्रा
कुतुकितगोपीमहितचरित्रा।

---

देवैः निहिता अर्पिता या सिताम्बुजस्रक् श्वेतपद्ममाला तन्निभा तत् सदृशी सती बभौ शुशुभे, स पीताम्बरः कृष्णः जगताम् अघं दुरितं हरतु नाशयतु।

(१३३) सहेति। वृषभस्येव गतिर्यस्य तथाभूतः सः अर्जुनः सहशरधि सतूणं निजं तथा पूर्ववत् कार्मुकं धनुः, तथैव पूर्ववदेव संवर्मितं सम्यक् कवचावृतम् अतनु महत् वपुः शरीरं निजमिति शेषः, तथैव पूर्ववदेव निहितं यथापूर्वं स्थापित-मित्यर्थः असिं खड्गं पश्यन् विस्मयम् उपाययौ प्राप। पूर्वं किरातरूपिणा हरेण सर्वस्यैव शरतूणादेर्भक्षितत्वात् कथं पुनरेतेषां सम्भव इति विस्मयवीजमिति बोध्यम्।

(१३४) अतीति। अतिसुरभिः अतिशयेन सुगन्धः सन्तानकः कल्पतरुविशेषः पुष्पश्रियां कुसुमसमृद्धीनाम् अतनुतरतया बाहुल्येन अभाजि अभञ्जीव अतिशयेन नम्र इति भावः। तथा वसन्तस्य ऋतुराजस्य आनकः पटहवाद्यभेदः तरुणपर-भृतः कोकिलयुवा रागिणां कामिनां रतये अनुरागवृद्धये इत्यर्थः स्वनं निनदम् अतनुत अकरीत्।

मुररिपुमूर्त्तिर्मुखरितवंशा
चिरमवताद्वस्तरलवतंसा ॥ (१३६)

१३ । इह वद तामरसं न ज जा यः ॥ (१३७)

स्फुटसुषमामकरन्दमनोज्ञं
व्रजललनानयनालिनिपीतम् ।
तव मुखतामरसं मुरशत्रो !
हृदयतड़ागविकाशि ममास्तु ॥ (१३८)

१४ । भवति न जावथ मालती ज रौ ॥ (१३९)

इह कलयाच्युत ! केलिकानने
मधुरससौरभसारलोलुपः ।

---

(१३५) नयेति । यस्य पादे नयसहितौ नगणयगणाभ्यां सहितौ न्यौ नगणयगणौ स्तः, तत् वृत्तं कुसुमविचित्रा नाम स्यात् ।

(१३६) उदाहरति विपिनेति । विपिनविहारे वनविहारे कुसुमविचित्रा पुष्पभूषितेत्यर्थः कुतकिताभिः कौतुकवतीभिः गोपीभिः सहितं पूजितं प्रशंसितमित्यर्थः चरितं यस्यास्तथाभूता मुखरितवंशा पूरितवेणुः वंशीरवं कुर्वतीत्यर्थः तरलवतंसा चञ्चलकुण्डला मुररिपोः कृष्णस्य मूर्त्तिः वः युष्मान् चिरम् अवतात् रक्षतु ।

(१३७) इहेति । यस्य पादे नजजा यः नगणजगणजगणेभ्यः परं यगणः स्यात्, इह छन्दोग्रन्थे तत् वृत्तं तामरसं वद ।

(१३८) उदाहरति स्फुटेति । हे मुरशत्रो ! कृष्ण ! स्फुटाः सुप्रकाशा या सुषमाः परमशोभाः ता एव मकरन्दा मधूनि तैः मनोज्ञं मनोहरं व्रजललनानां गोपाङ्गनानां नयनालिभिः नेत्रभ्रमरैः निपीतं निःशेषेण पीतं तव मुखतामरसं वदनरक्तोत्पलं रक्तोत्पलं तामरसमित्यमरः । मम हृदयमेव तड़ागः सरः तव विकाशि विराजि अस्तु भवतु ।

(१३९) भवतीति । यस्य पादे नजौ नकारजकारौ गणौ तदनु जरौ जकाररकारौ गणौ स्तः, तत् वृत्तं मालती नाम भवति । यमुनेति पाठान्तरम् ।

(१४०) उदाहरति इहेति । हे अच्युत ! कृष्ण ! इह अस्मिन् केलिकानने क्रीड़ावने कलय अवलोकय मधुरसानां मकरन्दानां सौरभसारे सौगन्ध्यातिशये लोलुभः

कुसुमकृतस्मितचारुविभ्रमाम्
अलिरपि चुम्बति मालतीं मुहुः ॥ (१४०)
यमुना क्वापि ॥

अयि ! विजहीहि दृढ़ोपगूहनं
त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्त्तते
वरतनु ! संप्रदन्ति कुक्कुटाः ॥ (१४१)
इति भारवौ ॥

१५। त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ (१४२)

प्रह्वामरमौलौ रत्नोपलक्लृप्ते
जातप्रतिबिम्बा शोणा मणिमाला ।
गोविन्दपदाब्जे राजी नखराणाम्
आस्तां मम चित्ते ध्वान्तं शमयन्ती ॥ (१४३)

---

लुब्धः अलिर्भमरोऽपि का कथा मानवानामित्यपि शब्दार्थः। कुसुमैः कृतः स्मितस्य ईषद्धासस्य चारुः मनोहरः विभ्रमो विलासो यया तादृशीं मालतीं मुहुः पुनःपुनः चुम्बति अत्र समानकार्य्येण भ्रमरमालत्योर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः तदुक्तं समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति।

(१४१) अयीति। अयि नवसङ्गमभीरु! नवसहवासप्रकाशभीते! दृढ़ोपगूहनं गाढ़ालिङ्गनं विजहीहि त्यज, वल्लभं प्रियं त्यज मुञ्च। हे वरतनु! वराङ्गि! एषः अरुणस्य सूर्य्यसारथेः करोद्गमः किरणोदयः अरुणोदय इति यावत् वर्त्तते न तु सूर्य्योदय इति भावः कुक्कुटाः सम्प्रवदन्ति रुवन्ति। तदयं शयनगृहात् प्रस्थानावसर इति भावः।

(१४२) त्यौ इति। यस्य पादे त्यौ त्यौ तगणयगणौ ततश्च तगणयगणौ स्तः, तत् वृत्तं गुहस्य कार्त्तिकेयस्य वक्त्रैः वदनैः षड्भिरित्यर्थः छिन्ना विच्छेदवती मणिमाला नाम स्यात्।

(१४३) उदाहरति प्रह्वेति। रत्नोपलैः मुकुटमणिभिरित्यर्थः क्लृप्ते उप-

१६। मोभः स्मौ चेज्जलधरमालाब्धग्रन्त्यैः॥ (१४४)

या भक्तानां कलिदुरितोत्तप्तानां
तापच्छेदे जलधरमाला नव्या।
भव्याकारा दिनकरपुत्रीकूले
केलीलोला हरितनुरव्यात् सा वः॥ (१४५)

१७। वसुयुगविरति र्नौ म्यौ (पुटो)ऽयम्॥ (१४६) इति छ०प०

१८। भुवि भवेन्नभजरैः (प्रियंवदा)॥ (१४७) इति छ०प०

१९। धीरै रभाणि (ललिता) तभौ जरौ॥ (१४८) इति छ०प०

---

शोभिते प्रह्वानां प्रणतानाम् अमराणां मौलौ किरीटे मौलिः किरीटधम्मिल्लाविल्यमरः जातं प्रतिबिम्बं यस्याः प्रतिबिम्बितेत्यर्थः अतएव शोणा रक्तवर्णा मणिमाला रत्नमाला इति प्रतीयमानोत्प्रेक्षा रत्नमालेव इत्यर्थः गोविन्दस्य कृष्णस्य पदाब्जे पदकमले नखराणां राजी श्रेणी मम चित्ते ध्वान्तं तमः मोहरूपमिति भावः शमयन्ती नाशयन्ती आस्तां तिष्ठतु।

(१४४) मोभ इति। यस्य पादे मकारभकारौ गणौ तदनु सकारमकारौ गणौ स्यातां चेत् यदि, तदा तत् वृत्तम् अब्धग्रन्त्यैः चतुर्थवर्णैरन्त्यवर्णैश्च विच्छिन्ना जलधरमाला नाम स्यात्।

(१४५) उदाहरति। या दिनकरस्य सूर्य्यस्य पुत्र्याः कन्यायाः यमुनायाः कूले केलिलोला क्रीड़ाचपला कलिदुरितोत्तप्तानां कलिकालपापसन्तप्तानां भक्तानां तापच्छेदे सन्तापनिवृत्तौ नव्या अभिनवा जलधरमाला मेघमाला इवेति प्रतीयमानोत्प्रेक्षा वर्त्तते इति शेषः भव्याकारा सुन्दरी सा हरितनुः कृष्णमूर्त्तिः वः युष्मान् अव्यात् रक्षतु।

(१४६) वसुयुगेति। यस्य पादे नयुगलं ततो मकारयकारौ गणौ भवतः अयं वसुषु अष्टमवर्णेषु युगेषु चतुर्थेषु च वर्णेषु विरतिर्विच्छेदो यस्य तथाभूतः पुटो नाम वृत्तं स्यात्।

(१४७) भुवीति। नभजरैः गणैः प्रतिपादं रचितं वृत्तं भुवि पृथिव्यां प्रियंवदा नाम स्यात्।

(१४८) धीरैरिति। यस्य पादे तभौ तगणभगणौ ततो जरौ जकाररकारौ गणौ स्तः, धीरैः विद्वद्भिः तत् वृत्तं ललिता नाम अभाणि उक्ता।

२०। ननभर सहिता (गदितोज्ज्वला)॥ (१४९) इति छ० प०

२१। इह (नवमालिका) नजभयैः स्यात्॥ इति छ० प०

२२। पञ्चमुनि भ्मौसात् सयुता (ललना)॥(१५०) इति छ०प०

२३। (ललिता) मभिहितं नौ स्रौ नामतः॥(१५१) इति छ०प०

२४। (द्रुतपदं) भवति न भनया श्चेत् (१५२) इति छ० प०

२५। सर्वे मा यस्मिन् सोऽयं (विद्याधारः) स्यात्॥ (१५३) इति छ०प०

२६। लघुर्गुरुर्वदन्ति पञ्च चामरम्॥ (१५४) इति छ०प०

२७। (सारङ्गसंज्ञं) समस्तै स्तकारै स्तु॥ (१५५) इति छ०प०

२८। समस्त-ज मीरय (मौक्तिकदाम)॥ (१५६) इति छ०प०

२९। (मोटक नाम) समस्त भ मीरय॥ (१५७) इति छ०प०

---

(१४९) ननेति। प्रतिपदं ननभरसहिता नकारनकारभकाररकारैः गणैः सहिता रचितेत्यर्थः उज्ज्वला नाम वृत्तं गदिता उक्ता।

(१५०) पञ्चेति। यस्य पादे सगणमगणौ ततः सगणयुगलं तत् पञ्चमुनि पञ्चसु मुनिषु सप्तसु च विच्छिन्नमित्यर्थः वृत्तं ललना नाम स्यात्।

(१५१) ललितमिति। यस्य पादे नयुगलं ततो सकाररकारौ गणौ स्तः, तत् वृत्तं नामतः नाम्ना ललितम् अभिहितम्।

(१५२) द्रुतपदमिति। चेत् यदि नभनयाः गणाः प्रतिपादमिति शेषः स्युः, तदा तत् वृत्तं द्रुतपदं नाम भवति।

(१५३) सर्वे इति। यस्मिन् वृत्ते सर्वे चत्वार इति भावः माः मगणाः प्रतिपादमिति शेषः सोऽयं विद्याधारः नाम वृत्तं स्यात्।

(१५४) लघुरिति। यस्य पादे आदौ लघुवर्णः, ततो गुरुवर्णः इत्थं द्वादशवर्णाः सन्तीति भावः तत् वृत्तं पञ्चचामरं वदन्ति।

(१५५) सारङ्गेति। समस्तैः चतुर्भिरिति भावः तकारैः तगणैः रचितं वृत्तं प्रतिपादमिति शेषः सारङ्गसंज्ञं स्यात्।

(१५६) समस्तजमिति। समस्तजं चतुर्भिर्जकारैः रचितमिति यावत् वृत्तं मौक्तिकदाम नाम ईरय वद।

२०। रविलघु (तरलनयन) मिह।॥ (१५८) इति छ० प०

---

अतिजगती ॥ [ ८१९२ ]

( त्रयोदशाक्षरा वृत्तिः )

१। त्र्याशाभिर्म न ज र गाः प्रहर्षिणीयम् ॥ (१५९)

गोपीनामधरसुधारसस्य पानैः
उत्तुङ्गस्तनकलसोपगूहनैश्च।
आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः
संसारे मतिरभवत् प्रहर्षिणीह ॥ ( १६० )

२। ज भौ स जौ गिति रुचिरा चतुर्ग्रहैः ॥ (१६१)

पुनातु वो हरिरतिरासविभ्रमौ
परिभ्रमन् व्रजरुचिराङ्गनान्तरे।

---

(१५७) मौटकेति। समस्ताश्चत्वार इति भावः भा भगणा यत्र तत् वृत्तं मौटकनाम मौटकाख्यम् ईरय वद।

(१५८) रवीति। रवयः द्वादशसंख्यका लघवो यत्र तादृशं वृत्तं प्रतिपादमिति शेषः इह छन्दोग्रन्थे तरलनयनं नाम वृत्तं स्यात्।

(१५९) त्र्याशाभिरिति। यस्य पादे मनजरगाः मगणनगणरगणेभ्यः परं गुरुरेकः तत् वृत्तं त्र्याशाभिः तृतीयवर्णैः दशमवर्णैश्च विच्छिन्नेति शेषः। प्रहर्षिणी नाम स्यात्।

(१६०) उदाहरति गोपीनामिति। इह संसारे गोपीनाम् अधरसुधारसस्य पानैः उत्तुङ्गानाम् उन्नतानां स्तनकलसानां कुचकुम्भानाम् उपगूहनैः आलिङ्गनैः मर्दनैश्च इति यावत् तथा आश्चर्य्यैः विचित्रैः रतिविभ्रमैः सुरतविलासैरपि प्रहर्षिणी प्रकृष्टाह्लादवतीत्यर्थः मतिः अभवत्।

(१६१) जभाविति। यस्य पादे जभौ जकारभकारौ गणौ तदनु सजौ सकारजकारौ गणौ ततश्च गुरुर्भवति, तत् वृत्तं चतुर्ग्रहैः चतुर्थवर्णैः ग्रहैर्नवमवर्णैश्च विच्छिन्नेति शेषः रुचिरा नाम स्यात्।

(१६२) उदाहरति पुनात्विति। समीरणेन वायुना उल्लसिता या लताः

समीरणोल्लसितलतान्तरालगो
यथा मरुत्तरलतमालभूरुहः ॥ ( १६२ )

अभून्नृपो विबुधसखः परन्तपः
श्रुतान्वितो दशरथ इत्युदाहृतः।
गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥ ( १६३ )

इति भट्टौ

३। वेदै रन्ध्रैर्म्तौ य स गा मत्तमयूरम् ( १६४ )

लीला नृत्यन्मत्तमयूरध्वनिकान्तं
नृत्यन्नीपासोदिपयोदानिलरम्यम्।
रासक्रीड़ाकृष्टमना गोपवधूभिः
कंसध्वंसी निर्जनवृन्दावनमाप ॥ ( १६५ )

---

तासाम् अन्तरालगः मध्यवर्त्ती मरुता वायुना तरलः चञ्चलः तमालभूरुहः तमालतरुर्यथा व्रजस्य गोकुलस्य रुचिराणां मनोहारिणीनाम् अङ्गनानाम् अन्तरे मध्ये परिभ्रमन् विचरन् अतिरासविभ्रमी अतिशयेन रासक्रीड़ाविलासी हरिः कृष्णः युष्मान् पुनातु।

(१६३) अभूदिति। विबुधानां देवानां सखा अथवा विः पक्षी जटायुः बुधाः पण्डिताः तेषां सखा विबुधसखः परन्तपः अरिन्दमः श्रुतान्वितः शास्त्रदर्शीत्यर्थः दशसु दिक्षु गतो रथो यस्येति दशरथ इति उदाहृतः ख्यातिं गतः नृपः राजा अभूत्। सनातनो विष्णुः स्वयं भुवनानां जगतां हितं रावणवधादिरूपं कर्म तदेव छलं तेन हेतुना गुणैः गाम्भीर्यादिभिः वरं श्रेष्ठं यं दशरथं पितरम् उपागमत् प्रापत् दशरथस्य पुत्रत्वेन अवततारेति समुदायार्थः।

(१६४) वेदैरिति। यस्य पादे म्तौ मकारतकारौ गणौ तदनु यगणसगणौ ततश्च गुरुरेकः तत् वृत्तं वेदैश्चतुर्भिश्चतुर्थैर्वर्णैरित्यर्थः रन्ध्रैः नवभिर्नवमैरिति यावत् वर्णैर्विच्छिन्नमिति शेषः मत्तमयूरं नाम स्यात्।

(१६५) उदाहरति लीलेति। गोपवधूभिः रासक्रीड़ार्थम् आकृष्टं मनो यस्य तादृशः कंसध्वंसी कृष्णः लीलया नृत्यन्तः ये मत्तमयूराः तेषां ध्वनिभिः कान्तं

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढ़ं प्रभवं सः।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि॥ (१६६)
इति रघौ॥

४। न युगल सयुगलगैरिति चण्डी॥ (१६७)

जयति दितिजरिपुताण्डवलीला
कुपितकवलकरकालियमौलौ।
चरणकमलयुगचापलचण्डी
पदनखरुचिजितभोगमणिश्रीः॥ (१६८)

५। स ज सा ज गौ च यदि मञ्जुभाषिणी॥ (१६९)

---

रमणीयं तथा नृत्यन्तः वायुभरेण कम्पमाना इति भावः ये नीपाः कदम्बाः तेषाम् आमोदी सौरभवान्. यः पयोदानिलः मेघसमीरणः तेन रम्यं निर्जनवृन्दावनम् आप प्राप्तवान्।

(१६६) हा तातेति। स क्षितिपः राजा दशरथोऽपि हा तात! इति क्रन्दितं रुदितम् आकर्ण्य श्रुत्वा विषण्णः किमेतत् मया कृतमिति विषादं गतः तस्य क्रन्दितस्य वेतसैः वेतसवनैः गूढ़म् आवृतं प्रभवम् उत्पत्तिस्थानम् अन्विष्यन् सन् शल्यप्रोतं शल्यास्त्रविद्धं सकुम्भं सजलकलसं मुनिपुत्रं वीक्ष्य दृष्ट्वा तापात् मनः-पीड़ातिरेकात् अन्तःशल्य इव स्वयं शल्यविद्ध इव आसीत्।

(१६७) नयुगलेति। यस्य पादः नयुगल सयुगलगैः नद्वयसद्वययोरनन्तरं गुरुणैकेन स्यात् तद्वृत्तं चण्डीति नाम स्यात्।

(१६८) उदाहरति जयतीति। कुपितस्य क्रुद्धस्य कवलकरस्य ग्रासोद्यतस्य कालियस्य नागस्य मौलौ शिरसि चरणकमलयोः पादपद्मयोः चापलेन सञ्चलनेन चण्डी समुद्धता पदनखानां रुचिभिः प्रभाभिः जिता भोगमणेः फणरत्नस्य श्रीः शोभा यया तादृशी दितिजानां दैत्यानां रिपोः कृष्णस्य ताण्डवलीला नृत्यविलासः जयति सर्वोत्कर्षेण वर्त्तते।

(१६९) सजसा इति। यदि सजसा गणाः ततः जगौ जगणो गुरुरेकश्च स्यात् प्रतिपादमिति शेषः तदा मञ्जुभाषिणी नाम वृत्तं स्यात्।

अमृतोर्मिशीतलकरेण लालयं
स्तनुकान्तिरोचितविलोचनो हरे!।
नियतं कलानिधिरसीति वल्लवी
मुदमच्युते व्यधित मञ्जुभाषिणी ॥ (१७०)

सुनन्दिनीति शम्भौ ॥

६। न न त त गुरुभिश्चन्द्रिकाऽश्वर्त्तुभिः ॥ (१७१)

शरदमृतरुचश्चन्द्रिकाच्छालिते
दिनकरतनयातीरदेशे हरिः।
विहरति रभसाद्वल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ (१७२)

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ (१७३)

---

(१७०) उदाहरति अमृतोर्मीति। हे हरे! कृष्ण! त्वं तनुकान्त्या शरीरसौन्दर्य्येण रोचितानि सस्पृहीकृतानि विलोचनानि नयनानि लोकानामिति भावः येन तथाविधः तथा अमृतोर्मिवत् सुधालहरीवत् शीतलः यः करः हस्तः अन्यत्र किरणः तेन बलिहस्तांशवः करा इत्यमरः लालयन् स्पृशन् अस्मानिति शेषः नियतं निश्चितं कलानिधिः चन्द्रः असि भवति इति मञ्जुभाषिणी मधुरालापिनी वल्लवी गोपी अच्युते कृष्णे अच्यु तस्येति भावः मुदम् आनन्दं व्यधित कृतवती।

(१७१) ननेति। यस्य पादः ननततगुरुभिः नगणयुगलात् परं तगणद्वयं ततो गुरुणा स्यात्, तत् वृत्तम् अश्वर्त्तुभिः सप्तभिः षड्भिश्च विच्छिन्नेति शेषः चन्द्रिका नाम स्यात्। चन्द्रिकां केचित् चमां वदन्तीति द्रष्टव्यम्।

(१७२) उदाहरति शरदिति। हरिः कृष्णः शरदमृतरुचः शरच्चन्द्रस्य चन्द्रिकाभिः च्छालिते विशोभिते दिनकरस्य या तनया यमुना तस्याः तीरदेशे वल्लवीभिः गोपीभिः समं सह त्रिदिवयुवतिभिः देवाङ्गनाभिः सह कोऽपि देवो यथा इन्द्र इव रभसात् हर्षात् रभसो वेगहर्षयोरित्यमरः। विहरति क्रीड़ति।

इति भारवौ ॥ उत्पलिनीति केचित् ॥

७। स ज साः स गौ च कथितः कलहंसः (१७४)

यमुनाविहारकुतुके कलहंसो
व्रजकामिनीकमलिनीकृतकेलिः।
जनचित्तहारिकलकण्ठनिनादः
प्रमदं तनोतु तव नन्दतनूजः ॥ (१७५)

सिंहनादः क्वापि।

८। स ज सा ज गौ च भवति प्रबोधिता ॥ (१७६)

शयिता मृषा चटुलमाननिद्रया
रतिकेलिकुञ्जनिलये विलासिनी।

---

(१७३) इहेति। इह अस्मिन् पर्वते असुतरं दुस्तरमित्यर्थः दुर्विगाहमिति यावत् अन्तरं मध्यभागं दुरधिगमैः दुर्ज्ञेयैरित्यर्थः आगमैः शास्त्रैः सततं किञ्चित् वर्णयन्ति कीर्त्तयन्ति बुधा इति शेषः। किन्तु अतिविपिनम् अतिगहनं दिग्-व्यापिनं दिशो व्याप्य तिष्ठन्तम् अमुं पर्वतं परं पुरुषमिव परमात्मानमिव परं केवलं पद्मयोनिः ब्रह्मा वेद जानाति नान्य इत्यर्थः। अत्र यमकोपमयोः संसृष्टिः।

(१७४) सजासा इति। यस्य पादे सजसाः गणा ततः सगणो गुरुश्च भवति, तत् वृत्तं कलहंसो नाम कथितः।

(१७५) उदाहरति यमुनेति। यमुनायां विहारे यत् कुतुकं कौतूहलं तस्मिन् कलहंसः हंसविशेषः व्रजकामिन्यः एव कमलिन्यः पद्मिन्यः ताभिः कृतः केलिः क्रीड़ा येन तथोक्तः तथा जनानां चित्तहारी मनोहारी कलः मधुरः कण्ठनिनादः कण्ठस्वरः यस्य तादृशः नन्दतनूजः कृष्णः तव प्रमदम् आनन्दं तनोतु विस्तार-यतु।

(१७६) सजसा इति। यस्य पादे सजसा गणाः ततो जगणो गुरुश्च स्यात्, तत् वृत्तं प्रबोधिता नाम भवति। मञ्जुभाषिणीप्रबोधितयोरेकलक्षणत्वेऽपि पृथगुपादानं नामभेदादिति बोध्यम्।

(१७७) उदाहरति शयितेति। मृषा मिथ्या सकपटेत्यर्थः चटुला चञ्चला

मुरवैरिणा श्रवणखर्जनादिना
स्मितमाततान सपदि प्रबोधिता ॥ (१७७)

९। भवति मृगेन्द्रमुखं न जौ जरौ गः ॥ (१७८)

गुरुभुजवीर्य्यभरं हरिं मदान्धा
युधि समुपेत्य न दानवा जिजीवुः।
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य
क्व नु खलु बिभ्रति जीवनस्य योगम् ॥ (१७९)

१०। यमौ रौ विख्याता (चञ्चरीकावली) गः ॥ (१८०)

इति छ० प०।

११। नसरयुगगैः(चन्द्ररेखा)त्तु लोकैः ॥ (१८१) इति छ० प०।

१२। (उपस्थित)मिदं ज्सौ त्सौ यदि गुरुः स्यात् ॥ (१८२)

इति छ० प०।

---

अस्थिरेत्यर्थः अवास्तविकत्वादिति भावः या माननिद्रा तया हेतुना रतिकेलिकुञ्जगृहे सुरतविहारनिकुञ्जभूमौ शयिता निद्रिता विलासिनी काचित् गोपी मुरवैरिणा कृष्णेन श्रवणखर्जनादिना कर्णकण्डूयनादिना आदिपदेन चुम्बनादिपरिग्रहः। सपदि सहसा प्रबोधिता जागरिता सती स्मितम् ईषद्धास्यम् आततान कृतवती मानं तत्याज इति भावः।

(१७८) भवतीति। यस्य पादे नजौ नगणजगणौ ततो जरौ जगणरगणौ, तदनु गुरुश्च तत् वृत्तं मृगेन्द्रमुखं भवति।

(१७९) उदाहरति गुर्विति। मदान्धा मदोद्धता इत्यर्थः दानवाः युधि युद्धे गुरुर्महान् भुजयोः वीर्य्यभरः वीर्य्यातिरेकः यस्य तथाभूतं हरिं कृष्णं समुपेत्य प्राप्य न जिजीवुः प्राणान् तत्यजुरित्यर्थः। नु वितर्के तथा हि मृगाः क्षुधितस्य मृगेन्द्रस्य सिंहस्य मुखम् उपेत्य प्राप्य क्व खलु कुत्र प्रदेशे जीवनस्य योगं बिभ्रति ? न कुत्रापीत्यर्थः। अत्र प्रतिवस्तूपमालङ्कारः तदुक्तं दर्पणे।प्रतिवस्तूपमा सा स्याद् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति।

(१८०) यमाविति। यस्य पादे यमौ यगणमगणौ ततो रौ रगणद्वयं ततो गुरुश्च, तत् वृत्तं चञ्चरीकावली विख्याता कथिता।

१३। जतौ सजौ गो भवति (मञ्जुहासिनी)॥ (१८३)
इति छ०प०।

१४। (कुटजगति)र्नजौ समर्त्तुम्तौ गुरुः॥ (१८४) छ०प०।

१५। इदं (कन्दुकं) यत्र येभ्यश्चतुर्भ्यो गः॥ (१८५) छ० प०।

१६। एते क्रमात्तभसजसंज्ञका गणा
गश्चान्ततो यदि निहितो महीपते!।
वेदैर्ग्रहैर्भवति यतिश्च शोभना
नागाधिपो वदति तदा (प्रभावतीम्)॥ (१८६) छ०प०।

---

शर्करी। [ १६३८४ ]
( चतुर्दशाक्षरा वृत्तिः )

१। मो गौ नौ मश्चेच्छरनवभिरसम्बाधा॥ (१८७)

---

(१८१) नसरेति। यस्य पादः नसरयुगगैः नगणसगणरगणैः चतुर्भिर्गुरुभिश्च भवति, तत् वृत्तम् ऋतुलोकैः षड्भिः सप्तभिश्च विच्छिन्नेति शेषः चन्द्ररेखा नाम स्यात्।

(१८२) उपस्थितमिति। यदि जसौ जगणसगणौ, तसौ तगणसगणौ ततश्च गुरुः स्यात् प्रतिपादमिति शेषः तदा इदं वृत्तम् उपस्थितं नाम भवति।

(१८३) जताविति। यस्य पादे जतौ जगणतगणौ ततः सजौ सगणजगणौ ततश्च गुरुः, तत् वृत्तं मञ्जुहासिनी नाम भवति।

(१८४) कुटजेति। यस्य पादे नजौ नगणजगणौ, ततौ सतौ मगणतगणौ ततश्च गुरुः, तत् वृत्तं समर्त्तुं सप्तभिः षड्भिश्च विच्छिन्ना कुटजगतिर्नाम स्यात्।

(१८५) इदमिति। यत्र वृत्ते चतुर्भ्योयेभ्यः यगणेभ्यः परं गः गुरुरेकः प्रतिपादमिति शेषः, इदं कन्दुकं नाम स्यात्।

(१८६) एते इति हे महीपते! एते तभसजसंज्ञकाः गणाः क्रमात् भवन्ति, अन्ततः तदनन्तर गः गुरुर्निहितः अर्पितः, तथा वेदैः चतुर्भिर्ग्रहैर्नवभिश्च शोभना यतिर्विच्छेदो भवति, तदा नागाधिपः पिङ्गलः प्रभावतीं नाम वृत्तं वदति।

(१८७) मोगाविति। यस्य पादे मगणात् परं गुरुद्वयं ततो न युगलं तदनु

वीर्य्याग्नौ येन ज्वलति रणवशात् क्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसम्बाधा।
धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः
साधूनां बाधां प्रशमयतु स कंसारिः॥ (१८८)

२। ज्ञेयं वसन्ततिलकं त भ जा ज गौ गः॥ (१८९)

फुल्लं वसन्ततिलकं तिलकं वनाल्याः
लीलापरं पिककुलं कलमत्र रौति।
वात्येष पुष्पसुरभिर्मलयाद्रिवातो
यातो हरिः स मथुरां विधिना हताः स्मः॥ (१९०)

सिंहोद्धता क्वापि॥

३। न न र स लघु गैः स्वरैरपराजिता॥ (१९१)

---

मगणश्चेत् यदि भवति तदा तद्वृत्तं शरनवभिः पञ्चभिर्नवभिश्च विच्छिन्ना असम्बाधा नाम स्यात्।

(१८८) उदाहरति वीर्य्याग्नाविति। येन रणवशात् युद्धव्यापारात् ज्वलति वीर्य्यमेव अग्निः तस्मिन् दैत्येन्द्रे हिरण्यकशिपौ कंसे क्षिप्ते पातिते निहते सतीत्यर्थः इयं धरणिः पृथ्वी असम्बाधा निर्बाधा जाता, धर्मस्थित्यर्थं धर्ममर्य्यादारक्षणार्थं प्रकटितः प्रकाशितः तन्वा देहस्य सम्बन्धः येन तथाभूतः देहधारीत्यर्थः स कंसारिः कृष्णः साधूनां बाधां विपदं प्रशमयतु शान्तिं नयतु।

(१८९) ज्ञेयमिति। यस्य पादे तभजा गणाः, ततो जगौ गः जगणो गुरुद्वयञ्च, तत् वृत्तं वसन्ततिलकं ज्ञेयम्।

(१९०) उदाहरति फुल्लमिति। गोपीनामुक्तिरियम्। वसन्तस्य ऋतोः तिलकं विशेषकभूतं तमालपत्रतिलकचित्रकाणि विशेषकमित्यमरः। वनाल्याः वनश्रेण्याः तिलकं तिलपुष्पं फुल्लं विकसितम्। अत्र वसन्ते लीलापरं क्रीड़ामत्तं पिककुलं कोकिलवृन्दं कलं मधुरास्फुटं रौति ध्वनति, एष पुष्पैः सुरभिः सौरभवान् मलयाद्रिवातः मलयाचलसमीरणः वाति वहति, स हरिः कृष्णः मथुरां यातः गतः, अतः विधिना दैवेन हताः स्मः वयमिति शेषः।

(१९१) ननेति। यस्य पादः ननरसलघुगैः नगणयुगलात् परं रसाभ्यां गणाभ्यां ततो लघुर्गुरुश्च भवति तत् वृत्तं स्वरैः सप्तभिर्वर्णैः छिन्ना अपराजिता नाम स्यात्।

यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता ।
व्यजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुड़ध्वजः ॥ (१९२)

४ । न न भ न ल गि ति प्रहरणकलिका ॥ (१९३)

व्यथयति कुसुमप्रहरण ! कलिका
प्रमदवनभवा तव धनुषि तता ।
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम् ॥ (१९४)

५ । मात्तो नो मो गौ यदि गदिता वासन्तीयम् ॥ (१९५)

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।

---

(१९२) उदाहरति यदिति । यस्य अनवधिना अशेषेण भुजप्रतापेन कृतम् आस्पदं प्रतिष्ठा यस्याः तथाविधा अतएव परैः शत्रुभिः अपराजिता अपराभूता यदुनिचयचमूः यादवकुलसेना समरे संग्रामे समस्तं रिपुव्रजं शत्रुसङ्घं व्यजयत विजितवती, जगतां गतिराश्रयः नाथ इत्यर्थः स गरुड़ध्वजः कृष्णः जयति सर्वोत्कर्षेण वर्त्तते ।

(१९३) ननेति । यस्य पादे नगणद्वयं ततो भगणः तदनु नगणः अनन्तरं लघुरेको गुरुश्चैकः, तत् प्रहरणकलिका नाम वृत्तं स्यात् ।

(१९४) उदाहरति व्यथयतीति । हे कुसुमप्रहरण पुष्पशर ! काम ! प्रमदवनभवा प्रमदवनात् जाता तव धनुषि तता विस्तृता आरोपितेति यावत् कलिका कोरकः पुमानित्यमरः । व्यथयति पीड़यति मामिति शेषः । तत तस्मात् इह विरहविपदि अविरतम् अनवरतं मधुमथनस्य कृष्णस्य गुणानां स्मरणं मे मम शरणं गतिः । कस्याश्चिद् गोप्या उक्तिः ।

(१९५) मात्त इति । यदि पादे मगणात् तगणः, ततो नगणमगणौ तदनु गुरुद्वयं भवति, तदा इयं वासन्ती नाम वृत्तं गदिता उक्ता ।

(१९६) उदाहरति भ्राम्यद्भृङ्गीति । कंसारातौ कृष्णे नृत्यति सति निर्भरः

लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥ (१९६)

६। द्विःसप्तच्छिदि लीला म्सौ म्भौ गौ चरणे चेत् ॥ (१९७)

मुग्धे ! यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ (१९८)

७। स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ॥ (१९९)

सरसखगकुलालापनान्दीमुखीयं
लहरिभुजलया चारुफेनस्मितश्रीः ।
सुरहर ! कलयासक्तिमासाद्य किन्ते
प्रमुदितहृदया भानुजा नृत्यतीह ॥ (२००)

---

सातिशयाः ये मधुरा आलापाः ते एव उद्गीतानि उच्चैर्गीतानि तैः भ्राम्यन्तः भृङ्गा यस्यां तथाभूता, श्रीखण्डाद्रेः मलयाचलस्य अद्भुतपवनैः अपूर्ववातैः मन्दान्दोला ईषत्कम्पिता तथा पल्लवैः विलसन्तः ये हस्तानाम् उल्लासाः भुजलयाः तैः लीलालोला क्रीड़ाचपला इयं वासन्ती माधवीलता, वासन्ती माधवीलतेत्यमरः सदृशी नृत्यता कृष्णेन समं नृत्यतीति भावः ।

(१९७) द्विरिति। चेत् यदि चरणे पादे म्सौ गणौ ततो म्भौ गणौ तदनु गुरुद्वयं भवति तदा सप्तसु सप्तसु वर्णेषु विच्छिन्ना लीला नाम वृत्तं स्यात् ।

(१९८) उदाहरति मुग्धे इति। हे मुग्धे ! मूढ़े ! यौवनस्य लक्ष्मीः श्रीः विद्युद्विभ्रमवत् सौदामिनीस्फुरणवत् लीला चञ्चला, त्रैलोक्येषु अद्भुतं रूपं यस्य तादृशः गोविन्दः कृष्णः अतिदुरापः अतिशयेन दुष्प्राप्यः। तत् तस्मात् गुञ्जद्भिः भृङ्गैः सनाथे युक्ते वृन्दावनकुञ्जे श्रीनाथेन कृष्णेन समेता सङ्गता सती स्वच्छन्दं केलिं क्रीड़ां कुरु।

(१९९) स्वरेति। यदि नौ नगणौ तदनु तौ तगणौ ततश्च गुरुद्वयं भवति प्रतिपादमिति शेषः तदा स्वरभिदि सप्तभिः सप्तभिर्वर्णैः विच्छिन्ना नान्दीमुखी नाम वृत्तं स्यात् ।

(२००) उदाहरति सरेति। हे मुरहर कृष्ण ! सरसैः मधुरैः खगकुलानां

८। (इन्दुवदना) भजसनैः सगुरुयुग्मैः॥ (२०१) इति छ० प०

९। न न त जगुरुगैः सप्तयति (नदी) स्यात्॥ (२०२) छ० प०

१०। (लक्ष्मी) रन्तविरामा मसौ तनौ गुरुयुग्मम्॥ (२०३)
इति छ० प०

११। विन नगगिति वसुयति (सुपवित्रम्)॥ (२०४) छ० प०

१२। (मध्यक्षामा) युगदशविरमा म्भौ न्यौ गौ॥ (२०५)
इति छ० प०

१३। युगदिग्भिः (कुटिल) मिति सभौ न्यौ गौ चेत्॥ (२०६)
इति छ० प०

---

पक्षिसङ्घानाम् आलापैः नान्दी मङ्गलमयी स्तुतिः मुखे यस्याः तादृशी लहर्यः तरङ्गा एव भुजयोः लया अभिनयविशेषाः यस्यास्तथाभूता तथा चारवः फेना एव स्मितस्य श्रियः यस्याः तथाविधा भानुजा यमुना कलया अंशतः कियतांशेनेत्यर्थः ते तव आसत्तिं सान्निध्यम् आसाद्य प्राप्य प्रमुदितहृदया हृष्टचित्ता सती इह किं नृत्यति ?।

(२०१) इन्दुवदनेति। यस्य पादः भजसनैः गणैः ततश्च गुरुवर्णाभ्यां भवति तत् वृत्तम् इन्दुवदना नाम स्यात्।

(२०२) ननेति। यस्य पादः ननतजगुरुगैः नयुगलतजगणैः गुरुद्वयेन च भवति तत् वृत्तं सप्तसु वर्णेषु यतियुक्तं नदी नाम स्यात्।

(२०३) लक्ष्मीरिति। यस्य पादे मसौ मगणसगणौ ततः तनौ तगणनगणौ ततश्च गुरुद्वयं तत् वृत्तम् अन्तविरामा अन्तच्छिन्ना लक्ष्मीर्नाम स्यात्।

(२०४) विनेति। यस्य पादे विनन गग् इति नगणचतुष्टयं ततो गुरुद्वयञ्च, तत् वृत्तं वसुषु अष्टसवर्णेषु यतिमत् सुपवित्रं नाम स्यात्।

(२०५) मध्यक्षामेति। यस्य पादे म्भौ मगणभगणौ न्यौ नगणयगणौ ततो गुरुद्वयं भवति, तत् वृत्तं युगदशविरमा चतुर्षु दशसु च वर्णेषु विरमा विच्छेदवती मध्यक्षामा नाम स्यात्।

(२०६) युगदिग्भिरिति। चेत् यदि सभौ गणौ ततो न्यौ नगणयगणौ तदनु गुरुद्वयं भवति प्रतिपादमिति शेषः तत् वृत्तं युगदिग्भिः चतुर्भिर्दशभिश्च वर्णैः विच्छिन्नं कुटिलमिति नाम स्यात्।

१४। नजभजला गुरुश्च भवति (प्रमदा)॥ (२०७) इति छ०प०

१५। सजसा यलौ गिति शरग्रहै (मंञ्जरी)॥ (२०८)
इति छ० प०

१६। नजभजगै गुंरुश्च वसुषट् (कुमारी)॥ (२०९) छ०प०

१७। नरनरै र्लगौ च रचितं (सुकेसरम्)॥ (२१०) छ० प०

१८। म्भौ न्यौ लगौ चेदिह भवति च (चन्द्रौरसः)॥ (२११)
इति छ० प०

१९। (वासन्तीयं) स्यादिह खलु मतौ न्यौ गौ चेत्॥ (२१२)
इति छ० प०

२०। (चक्रपद्द) मिह भननलगुरुभिः॥ (२१३) छ०प०

---

(२०७) नजेति। यस्य पादे नजभजला गुरुश्च नगणजगणभगणजगणास्ततो लघुरेको गुरुश्चैकः भवति, तत् वृत्तं प्रमदा नाम स्यात्।

(२०८) सजसा इति। यस्य पादे सजसाः गणाः ततो यलौ यगणो लघुश्च तदनु गुरुः, तत् वृत्तं शरग्रहैः पञ्चभिर्नवभिश्च वर्णैः विच्छिन्ना मञ्जरीति नाम स्यात्।

(२०९) नजेति। यस्य पादे नजभजगैः नगणजगणभगणजगणेभ्यः परं गुरुणा सह गुरुश्च भवति, तत् वृत्तं वसुषट् अष्टभिर्षड्भिश्च वर्णैः विच्छिन्नेति भावः कुमारी नाम स्यात्।

(२१०) नरनरैरिति। नरनरैः गणैः सह लगौ लघुगुरुवर्णौ यस्य पादे स्तः तत् वृत्तं सुकेशरं नाम रचितं कथितम्।

(२११) म्भौ इति। इह छन्दोग्रन्थे चेत् यदि म्भौ मगणभगणौ ततो न्यौ नगणयगणौ ततश्च लगौ लघुगुरुवर्णौ भवतः, तत् वृत्तं चन्द्रौरसो नाम भवति।

(२१२) वासन्तीयमिति। इह ग्रन्थे चेत् यदि मतौ मगणतगणौ ततो न्यौ नगणयगणौ ततश्च गौ गुरुद्वयं भवति प्रतिपादमिति शेषः तत् वृत्तं वासन्तीयं स्यात्।

(२१३) चक्रपदमिति। इह ग्रन्थे भननलगुरुभिः भगणनगणनगणलघुगुरुभिः यस्य पादो भवति तत् वृत्तं चक्रपदं नाम स्यात्।

## अतिशक्करी । (३२७६८)
## (पञ्चदशाक्षरा वृत्तिः)

१ । गुरुनिधनमनुलघुरिह शशिकला ॥ (२१४)

मलयजतिलकसमुदितशशिकला
व्रजयुवतिलसदलिकगगनगता ।
सरसिजनयनहृदयसलिलनिधिं
व्यतनुत विततरभसपरितरलम् ॥ (२१५)

२ । स्रगियमपि च रसनवरचितयतिः ॥ (२१६)

अयि सहचरि ! रुचिरतरगुणमयी
म्रदिमवसतिरनपगतपरिमला ।
स्रगिव निवस विलसदनुपमरसा
सुमुखि ! मुदितदनुजदलनहृदये ॥ (२१७)

---

(२१४) गुर्विति । इह ग्रन्थे गुरुनिधनमनुलघुः गुरुवर्णः निधने अन्ते यस्य तादृशः मनुश्चतुर्दशसंख्य इत्यर्थः लघुवर्णः यत्र प्रतिपादमिति शेषः तथाभूता शशिकला नाम वृत्तं स्यात् ।

(२१५) उदाहरति मलयेति । व्रजयुवतीनां व्रजाङ्गनानां लसत् विकसत् चारु इत्यर्थः अलिकं ललाटं ललाटमलिकं गोधिरित्यमरः । तदेव गगनम् आकाशं बद्धवा तत्र स्थितेत्यर्थः मलयजतिलकं चन्दनतिलकमेव समुदिता उदयं प्राप्ता शशिकला चन्द्रकला सरसिजनयनस्य पद्मनेत्रस्य कृष्णस्य हृदयमेव सलिलनिधिः सागरः तं विततेन विस्तृतेन रभसेन हर्षेण रभसो वेगहर्षयोरिति मेदिनी परितरलं परितः सर्वतः तरलं चञ्चलं व्यतनुत अकरोत् । महोदधेः पूर इवेन्दुदर्शनात् गुरुः प्रहर्षः प्रबभूव नात्मनीति रघुवंशः ।

(२१६) स्रगियमिति । इयं शशिकला रसेषु षट्सु नवसु च रचिता कृता यतिर्विच्छेदो यत्र तथाभूता चेदिति शेषः तदा स्रक् नाम वृत्तं भवति ।

(२१७) उदाहरति अयीति । अयि सुमुखि ! सुवदने ! सहचरि ! सखि ! रुचिरतरगुणमयी अतिसौन्दर्य्यवतीत्यर्थः अतिशोभनतन्तुमयी च म्रदिम्नः मार्दवस्य वसतिराश्रयः अतिकोमलेत्यर्थः अनपगतपरिमला सौरभशालिनीत्यर्थः विलसन्

३। वसुमुनियतिरिति मणिगुणनिकरः॥ (२१८)

नरकरिपुरवतु निखिलसुरगतिः
अमितमहिमभरसहजनिवसतिः।
अनवधिमणिगुणनिकरपरिचितः
सरिदधिपतिरिव धृततनुविभवः॥ (२१९)

४। न न म य य युतेयं मालिनी भोगिलोकैः॥ (२२०)

मृगमदकृतचर्च्चा पीतकौषेयवासा
रुचिरशिखिशिखण्डावद्धधम्मिल्लपाशा।
अनृजु निहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा॥ (२२१)

---

स्फुरन् अनुपमः अतुल्यः रसोऽनुरागः अन्यत्र मकरन्दः यस्यास्तथाभूता स्रगिव मालेव मुदितं हृष्टं यत् दनुजदलनस्य कृष्णस्य हृदयं तत्र निवस वसं कुरु। कृष्णं भजेति भावः।

(२१८) वस्विति। इयं शशिकला वसुषु अष्टसु मुनिषु सप्तसु यतिर्विरामो यत्र तादृशी चेत् मणिगुणनिकरो नाम वृत्तं स्यात्।

(२१९) उदाहरति नरकेति। निखिलानां सर्वेषां सुराणां देवानां गतिः आश्रयः नाथ इति यावत् अमितानाम् अपरिमितानां महिम्नां भरस्य अतिशयस्य सहजनिवसतिः निसर्गास्पदम् अनवधीनां मणीनां समग्ररत्नानां गुणनिकरैः शुक्लकृष्णादिवर्णैः सौन्दर्य्यातिशयैश्च परिचितः श्वेतोरक्तस्तथापीत इदानीं कृष्णतां गत इत्यनेन नानावर्णत्वस्य प्रतिपादितत्वात् सौन्दर्य्याद्यतिशयवत्त्वाच्च अन्यत्र बहुरत्नाधारत्वादिति भावः विख्यातः शोभितश्चेत्यर्थः सरिदधिपतिरिव समुद्र इव धृतः गृहीतः तन्वाः शरीरस्य विभवः महिमा येन तथाभूतः नरकरिपुः नरकस्य भूमिसुतस्य नरकाणां निरयाणाञ्च रिपुः संहर्त्तेत्यर्थः कृष्णः अवतु रक्षतु।

(२२०) ननेति। ननमययुता नगणद्वयेन ततो मगणेन ततश्च याभ्यां गणाभ्यां युता भोगिलोकैः भोगिभिरष्टाभिः लोकैः सप्तभिश्च वर्णैः छिन्नेति शेषः इयं मालिनी नाम वृत्तं स्यात्।

(२२१) उदाहरति। मृगमदेन कस्तूरिकया कृता चर्च्चा अङ्गरागो यया यस्या वा तथोक्ता कस्तूरीकृताङ्गरागेत्यर्थः पीतं यत् कौषेयं कृमिकोषोत्थं वासः वसनं

५। एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः॥ (२२२)

पायाद् वो गोविन्दः कालिन्दीकूलक्षौणीचक्रे
रासोल्लासक्रीडद्गोपीभिः सार्द्धं लीलाखेलः।
मन्दाकिन्यास्तीरोपान्ते खैरक्रीड़ाभिर्लीलो
यद्वद् देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः॥ (२२३)

मा कान्ते! पक्षस्यान्ते पर्य्याकाशे देशे स्वाप्सीः
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्।
क्षुत्क्षामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्रायात्
तस्माद् ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या॥ (२२४)

इति कण्ठाभरणः॥

---

यस्याः तथाभूता पीताम्बरेत्यर्थः रुचिरैः मनोज्ञैः शिखिशिखण्डैः मयूरपिच्छैः आबद्धः रचित इति भावः धम्मिल्लः संयतकेशः पाश इव यस्यास्तादृशी धम्मिल्लाः संयताः कचा इत्यमरः। अनृजु वक्रं यथा तथा अंशे स्कन्धदेशे निहितं वंशं वेणुम् उत्क्वाणयन्ती उच्चैर्वादयन्ती मालिनी धृतमाल्या अतएव धृता मधुरिपोः कृष्णस्य लीला यया तथाभूता राधा पातु रक्षतु अस्मानिति शेषः।

(२२२) एकेति। विद्युन्मालायाः मौ मौ गौ गौ विद्युन्माला इत्युक्तलक्षणायाः पादौ चरणौ एकेन वर्णेन न्यूनौ हीनौ चेत् लीलाखेलो नाम वृत्तं स्यात्।

(२२३) उदाहरति पायादिति। मन्दाकिन्याः स्वर्गङ्गायाः तीरोपान्ते खैरक्रीड़ाभिः खेच्छाविहारिणीभिः खेलन्तीभिः क्रीड़न्तीभिः स्वर्वेश्याभिः अप्सरोभिः लीलः साभिलाषः सतृष्ण इति यावत् लोलश्चलसतृष्णयोरित्यमरः। देवानामीशो देवेन्द्रो यद्वत् यथा, तथा कालिन्दी यमुना तस्याः कूलक्षौणीचक्रे तीरभूमौ रासोल्लासेन क्रीड़न्त्यः या गोप्यः ताभिः सार्द्धं लीलया खेलतीति तथाभूतः गोविन्दः कृष्णः वः युष्मान् पायात् अव्यात्।

(२२४) मा कान्ते इति। हे कान्ते! पक्षस्य अन्ते पौर्णमास्यवसाने पर्य्याकाशे समन्तात् आकाशमये इत्यर्थः अनावृते इति भावः देशे प्रदेशे इत्यर्थः रात्रौ रजन्यां मा स्वाप्सीः शयनं मा कुरु, शयने विपदमाह कान्तमिति। चेत् यदि राहुः क्षुत्क्षामः क्षुधार्त्तः इतश्च इतश्च प्राटन् पर्य्यटन् सन् तव कान्तं कमनीयं वक्त्रं पूर्णं

६। विपिनतिलकं न स न रेफयुग्मैर्भवेत् ॥ (२२५)
विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम्।
मलयमरुता रचितलास्यमालोकयन्
व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥ (२२६)

७। तूणकं समानिकापदद्वयं विनान्तिमम् ॥ (२२७)
सा सुवर्णकेतकं विकाशि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम्।
राधिका वितर्क्य माधवाद्य मासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे ! ॥ (२२८)

---

चन्द्रं वृत्तं जातं मत्वा प्रायात् ग्रसेत्। तस्मात् ध्वान्ते तिमिरे अन्धकाराच्छन्ने इति यावत् हर्म्यस्य अट्टस्य अन्ते उपरिदेशे एकान्ते विजने शय्या शयनं कर्त्तव्या।

(२२५) विपिनेति। नसनरेफयुग्मैः नगणसगणनगणरगणयुगलैः यस्य पादो भवेत् तत् वृत्तं विपिनतिलकं नाम।

(२२६) उदाहरति विपिनेति। मुग्धः सुन्दरः मोहनरूप इत्यर्थः हरिः कृष्णः वसन्तागमे मधुना कौसुमेन कृतः मदः उल्लासो येषां तथाभूतैः अतएव क्वणद्भिः गुञ्जद्भिः मधुकरैः भ्रमरैः वृतं व्याप्तं विकसितं विपिनतिलकं वनतिलपुष्पं मलयमरुता मलयपवनेन रचितं कृतं लास्यं नर्त्तनं यस्य तादृशं कम्पितमित्यर्थः लास्यं नृत्यञ्च नर्त्तने इत्यमरः। आलोकयन् पश्यन् व्रजयुवतिभिः गोपीभिः विहरति स्म विजहार।

(२२७) तूणकमिति। अन्तिमम् अन्त्यवर्णं विना अन्त्यवर्णहीनमित्यर्थः समानिकायाः ग्लौ रजौ समानिका तु इति लक्षणायाः पदद्वयं चरणयुगलं तूणकं नाम वृत्तं स्यात्।

(२२८) उदाहरति सेति। हे कलानिधे ! कलानां चतुःषष्टिविद्यानां कामविद्यानां निधे ! आश्रय ! अभिज्ञेत्यर्थः माधव ! कृष्ण ! सा राधा अद्य माधवे वैशाखे मासि त्वया विना तद्विरहेणेत्यर्थः विकासि विकस्वरम् अतएव भृङ्गैः पूरितं

८। म्नौ मो यौ चेद्भवेयुः सप्ताष्टकैश्चन्द्रलेखा ॥ (२२९)

विच्छेदे तु मुरारे ! पाण्डु प्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ॥
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किञ्चार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥ (२३०)

९। चित्रा नाम छन्दश्चित्रञ्चेत् त्रयो मा यकारौ ॥ (२३१)

गोपालीलीलालोला यद्वत् कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्द्धचित्रा ।
कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीड़तीयं
कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने ॥ (२३२)

---

पञ्चबाणस्य कामस्य सुवर्णकेतकं स्वर्णकेतकीपुष्पं बाणजालैः शरनिचयैः पूर्णं हेमतूणकं स्वर्णतूणीरभूतं वितर्क्य विशेषेण तर्कयित्वा सम्भाव्येत्यर्थः निर्भरम् अतिमात्रं मोहं मूर्च्छाम् एति प्राप्नोति ।

(२२९) म्नाविति । पादे म्नौ मगणरगणौ ततः मगणः तदनु यगणद्वयम् एते गणाः भवेयुः चेत् यदि, तदा सप्ताष्टकैः सप्तभिरष्टभिश्च वर्णैर्विच्छिन्ना चन्द्रलेखा नाम वृत्तं स्यात् ।

(२३०) उदाहरति विच्छेदे इति । कृष्णं प्रति कस्याश्चित् राधासख्या उक्तिः । हे मुरारे कृष्ण ! सा राधा ते तव विरहे पाण्डुः प्रकाशः कान्तिर्यस्याः तथाभूता कृशाङ्गी तथा म्लाना मलिना छाया कान्तिः शोभेति यावत् यस्य तादृशः दुकूलं वस्त्रं बिभ्रती परिदधाना न भ्राजते न शोभते । किञ्च आर्त्ता कातरा सती अम्भोदस्य मेघस्य गर्भे लीना चन्द्ररेखा यथा चन्द्रकलेव त्वां स्मरन्ती ध्यायन्ती जीवयोगं धत्ते प्राणान् धारयति ध्रुवम् उत्प्रेक्षे ।

(२३१) चित्रेति । चेत् यदि त्रयो मा मगणाः यकारौ यगणौ च पादे स्युः, तदा तत् चित्रम् अपूर्वं मनोहरमित्यर्थः छन्दः चित्रा नाम भवति ।

(२३२) उदाहरति गोपेति । कलिन्दस्य सूर्य्यस्य आत्मजाया यमुनाया अन्ते तटे इत्यर्थः गोपानां गोपबालकानाम् आलीभिः सङ्घैः गवां पालीभिः सङ्घैर्वा या लीला विहारः तत्र लोला साभिलाषा खेलन् चलन् दोलायमान इत्यर्थः मुक्ताहारः

१०। भवति नजौ भजौ रसहितौ (प्रभद्रकम्)॥ (२३३) छ० प०

११। सजना नयौ शरदशयति रि य (मेला)॥ (२३४) छ० प०

१२। (चन्द्रकान्ताभिधा) रौ म् सौ यौ विरमः स्वराष्टौ॥(२३५)
इति छ० प०

१३। ननतभरकृताष्ट स्वरै (रुपमालिनी)॥ (२३६) छ० प०

१४। (ऋषभाख्य) मेतदुदितं सयसा सयौ चेत्॥ (२३७)छ० प०

१५। कथयन्ति (मानसहंस) नाम सजौ जभराः॥ (२३८)
इति छ० प०

---

यत्र तादृशी तथा आरण्यस्रजा वनमालया लसता शोभमानेन मूर्द्ना शिरसा चित्रा अङ्गरूपा कंसारातेः कृष्णस्य मूर्त्तिः यद्वत् यथा वर्त्तते स्मेति शेषः इयं मूर्त्तिः तद्वत् मे मम हृदि क्रीड़ति, अस्मात् हृदयदेशे हरिमूर्त्तिक्रीड़नात् हरिस्मरणादिति भावः अन्यः स्वर्गः मोक्षो वा कः विद्यते ? तत् न जाने। एतदेव हरिस्मरणं स्वर्गो मोक्षश्च नान्य इति भावः।

(२३३) भवतीति। नजौ भजौ रसहितौ नगणजगणभगणजगणरगणाः पादे यदि स्युः तदा तत् वृत्तं प्रभद्रकं नाम भवति।

(२३४) सजना इति। यस्य पादे सजना सगणजगणनगणाः ततो न यौ नगणयगणौ शरेषु पञ्चसु दशसु च यतिर्विरामो यस्यास्तादृशी इयम् एला नाम वृत्तं स्यात्।

(२३५) चन्द्रेति। यस्य पादे रौ रगणौ म्सौ भगणसगणौ यश्च यगणश्च, तथा स्वराष्टौ स्वरेषु सप्तसु अष्टसु च विरामः विच्छेदः, तदा तत् वृत्तं चन्द्रकान्ता अभिधा नाम।

(२३६) ननेति। नगणद्वय तगणभगणरगणैः कृता रचिता उपमालिनी नाम वृत्तं स्यात् अत्र अष्टस्वरैः अष्टाभिः स्वरैः सप्तभिश्च वर्णैः विराम इत्यर्थः।

(२३७) ऋषभाख्यमिति। चेत् यदि पादे स यसा सजौ सगणयगणसगणेभ्यः परं सजौ गणौ भवतः, तदा एतत् वृत्तम् ऋषभ नाम उदितम् उक्तम्।

(२३८) कथयन्तीति। यस्य पादे सजौ सगणजगणौ ततो जभराः जगणभगण रगणाः सन्ति तत् वृत्तं मानसहंस नाम कथयन्ति बुधा इति शेषः।

१६ । सगणै: शिववक्त्रमितै र्गदिता (नलिनी) ॥ (२३९) छ०प०

१७ । शंस (निशिपालक) मिदं भजसनास्त्ररः ॥ (२४०) छ०प०

---

अष्टि: । [६५५३६]

(षोडशाक्षरा वृत्ति:)

१ । चित्रसंज्ञमीरितं समानिकापदद्वयन्तु ॥ (२४१)

विद्रुमारुणाधरौष्ठशोभि वेणुवाद्यहृष्ट-

वल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग ! ।

त्वां सदैव वासुदेव ! पुण्यलभ्यपाद ! देव ! ।

वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥ (२४२)

२ । भ्रत्रिनगै: स्वरात् खस्तृषभगजविलसितम् ॥ (२४३)

---

(२३९) सगणैरिति । शिववक्त्रमितै: शिववक्त्राणि पञ्च तन्मितै: सगणै: प्रतिपादमिति शेष: यत् वृत्तं सा नलिनी नाम गदिता कथिता ।

(२४०) शंसेति । यस्य पादे भजसना रश्च भगणजगणसगणनगणरगणा: स्युरित्यर्थ: इदं वृत्तं निशिपालकं शंस कथय ।

(२४१) चित्रेति । समानिकाया: ग्लौ रजौ समानिकाविति लक्षणाया: पदद्वयन्तु चरणद्वयमेव एवकारार्थस्तु शब्द: । चित्रसंज्ञं चित्रनामकं वृत्तम् ईरितम् उक्तम् ।

(२४२) उदाहरति विद्रुमेति । विद्रुम: प्रवाल: तद्वत् अरुण: रक्त: य: अधरौष्ठ: तस्मिन् शोभते इति तथोक्तं यत् वेणुवाद्यं तेन हृष्टानाम् उल्लसितानां वल्लवीजनानाम् अङ्गसङ्गेन जातम् उत्पन्नं मुग्धं सुन्दरं कण्टकं रोमाञ्च: यत्र तादृशम् अङ्गं यस्य तत्सम्बोधने हे वासुदेव ! वसुदेवसुत ! हे पुण्यलभ्यपाद ! पुण्यै: सुकृतै: लभ्य: पाद: यस्य तथाभूत: तत्सम्बुद्धौ, हे देव ! हे वन्यपुष्पचित्रकेश ! वन्यै: पुष्पै: चित्रा मनोहरा: केशा यस्य तत् सम्बुद्धौ, हे गोपवेश ! सदैव सततमेव त्वां संस्मरामि ।

(२४३) भ्रेति । भ्रत्रिनगै: भगणरगणनगणत्रयात् परं गुरुणा ऋषभगजविलसितं नाम वृत्तं स्यात् अत्र स्वरात् सप्तमवर्णात् परं खं शून्यं यतिरिति यावत् ।

......

यो हरिरुच्चखान खरतरनखशिखरैः
दुर्जयदैत्यसिंहसुविकटहृदयतटम्।
किं न्विह चित्रमेष यदखिलमपहृतवान्
कंसनिदेशदृप्यदृषभगजविलसितम्॥ (२४४)

गजतुरगविलसितमिति शम्भौ।

३। भात् स म त न गैरष्टच्छेदे स्यादिह चकिता॥ (२४५)

दुर्जयदनुजश्रेणीदुश्चेष्टाशतचकिता
यद् भुजपरिघत्राता याता साध्वसविगमम्।
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता भवरिपुतः॥ (२४६)

४। प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्॥ (२४७)

---

(२४४) उदाहरति य इति। यः हरिः खरतरैः तीक्ष्णतरैः नखशिखरैः नखाग्रैः दुर्जयस्य जेतुमशक्यस्य सुरासुरैरपीति शेषः दैत्यसिंहस्य हिरण्यकशिपोः सुविकटम् अतिकठिनं हृदयतटं हृत्पिण्डम् उच्चखान विददार, एष हरिः अखिलं समस्तं कंसस्य निदेशेन आज्ञया दृप्यतोः सदर्पयोः ऋषभः वृषरूपोऽरिष्टासुरः गजः कुवलयापीड़ाख्यः तयोः विलसितं विक्रीड़ितं संग्रामे विचरणमिति यावत् यत् अपहृतवान् नाशयामास इह जगति इदं किं चित्रम् आश्चर्यं नु वितर्के सिंहहन्तुर्गोगजवधो न विस्मयमावहतीति भावः।

(२४५) भादिति। भात् भगणात् परं समतनगैः सगणमगणतगणनगणैः ततो गुरुणैकेन इह ग्रन्थे चकिता नाम वृत्तं स्यात् अष्टच्छेदे अष्टसु विरामे सतीत्यर्थः।

(२४६) उदाहरति दुर्जयेति। दुर्जयानां दनुजानां दानवानां श्रेण्या या दुश्चेष्टाः अत्याचाराः तासां शतैः चकिता उपद्रुता दिविषदां देवानां माला गणः यस्य भुजौ एव परिघौ अर्गलौ ताभ्यां त्राता रक्षिता अतएव साध्वसविगमं भयाभावं याता प्राप्ता निर्भयीकृतेति यावत् शश्वत् सतत नन्दनविपिने दीव्यति विहरति, भवरिपुतः संसारशत्रोः भीता यूयं तं कृष्णं शरणं गच्छत प्राप्नुत।

(२४७) प्रमाणिकेति। प्रमाणिकायाः प्रमाणिका जरौ लगाविति लक्षणायाः पदद्वयं चरणयुगलं पञ्चचामरं नाम वृत्तं वदन्ति।

सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम्।
सुराङ्गनाभ वल्लवीकरप्रपञ्चचामर-
स्फुरत् समीरवीजितं सदाच्युतं भजामि तम्॥ (२४८)

५। म्भौ नो न्मौ गो मदनललिता वेदैःषड्तुभिः॥ (२४९)

विभ्रष्टस्रग् गलितचिकुरा धौताधरपुटा
ग्लायत् पत्रावलिकुचतटोच्छ्वासोर्मितरला।
राधात्यर्थं मदनललितान्दोलाऽलसवपुः
कंसाराते रतिरसमहो चक्रेऽतिचटुलम्॥ (२५०)

---

(२४८) उदाहरति। विचित्रैः विविधैः रत्नैः मण्डिते रञ्जिते लसता शोभमानेन वितानेन चन्द्रातपेन भूषिते सुरद्रूणां देवतरूणां कल्पवृक्षाणामित्यर्थः मूले यत् मण्डपं मन्दिरं तस्मिन् सलीलेन सविलासेन विभ्रमेण भङ्गिविशेषेण अलसं मन्थरं सुराङ्गनाभा देवाङ्गनासदृश्यः या वल्लव्यः गोप्यः तासां करप्रपञ्चेन यानि चामराणि धृतानीति शेषः तेभ्यः स्फुरन् यः समीरः वायुः तेन वीजितं तम् अच्युतं कृष्णं सदा भजामि।

(२४९) म्भाविति। यस्य मगणभगणौ ततो नगणः तदनु नगणमगणौ ततश्च गुरुः, तद्वृत्तं मदनललिता नाम स्यात् तत्र वेदैः चतुर्भिः षड्भिः पुनः षड्भिश्च वर्णैः यतिः भवति।

(२५०) उदाहरति विभ्रष्टेति। राधा अत्यर्थम् अतिशयेन मदनललितेन कामव्यापारेण य आन्दोलः क्षोभः तेन अलसं मन्थरं वपुः शरीरं यस्यास्तथाभूत अतएव विभ्रष्टा च्युता स्रक् माल्यं यस्याः तथोक्ता गलितचिकुरा स्खलितकेशा, धौतं चालितं रागहीनमित्यर्थः अधरपुटं यस्यास्तथोक्ता अधररसपानादिति भावः, तथा ग्लायन्त्यः ग्लानिं गच्छन्त्यः पत्रावल्यः ययोः मर्दनातिशयादिति भावः तथाभूतयोः कुचतटयोः पयोधरतटयोः उच्छ्वासोर्मिभिः निश्वासभरचपला क्लान्तिजनितनिश्वासभरेण कम्पितपयोधरेति भावः सती कंसारातेः कृष्णस्य अतिचटुलम् अतिचपलं रतिरसं रागातिरेकं चक्रे कृतवती अहो आश्चर्यं तादृशीं सुरतमर्दितां राधां दृष्ट्वा पुनरपि कृष्णः मन्मथवशंवदोऽभवदिति भावः।

६। नजभजरैः सदा भवति वाणिनी गयुक्तैः॥ (२५१)

स्फुरतु ममाननेऽद्य ननु वाणि! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम्।
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवामि नित्यम्॥ (२५२)

७। यमौ नः स्रौ गश्च प्रवरललितं नाम वृत्तम्॥ (२५३)

भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः।
स्मितं वक्त्रेऽकस्माद् दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक् प्रवरललितं वल्लवीनाम्॥ (२५४)

---

(२५१) नजेति। गयुक्तैः गुर्वक्षरयुतैः नजभजरैः नगणजगणभगणजगणरगणेभ्यः परं गुरुणा वर्णेनेति यावत् यस्य पादो भवति तत् वृत्तं सदा वाणिनी नाम भवति।

(२५२) उदाहरति स्फुरत्विति। ननु वाणि! हे सरस्वति! अद्य मम आनने तव चरणयोः पादयोः प्रसादस्य कृपायाः परिपाकतः फलेनेत्यर्थः नीतिरम्यं सुनयसम्पन्नं कवित्वं स्फुरतु येन अहं स्वरचितैः स्तवैः स्तुतिवचनैः भवजलराशिपारकरणक्षमं संसाराब्धिसन्तरणकरमित्यर्थः मुकुन्दं कृष्णं सततं नित्यं प्रतिदिनं स्तवामि कीर्त्तयामि।

(२५३) यमाविति। यस्य पादे यमौ नः यगणमगणनगणा इत्यर्थः ततः स्रौ सगणरगणौ तदनु गश्च गुरुश्च, तत् वृत्तं प्रवरललितं नाम भवति।

(२५४) उदाहरति भुजोत्क्षेप इति। शून्ये आकाशे चलवलयझङ्कारयुक्तः चञ्चलवलयध्वनिसहितः भुजोत्क्षेपः बाहुप्रसारणमित्यर्थः आश्लेषलौल्यादिति भावः प्रकटितः प्रकाशितः तुलाकोटिनादः नूपुरध्वनिर्येन तथाभूतः मुधा मिथ्या अकारणमिति यावत् पादन्यासः पदविक्षेपः, अकस्मात् अकारणं सहसेत्यर्थः वक्त्रे वदने स्मितं मन्दहासः तथा दृशि नेत्रे पटुकटाक्षाणां चटुलापाङ्गदर्शनानां या ऊर्मिः परम्परा सैव लीला विलासः ईदृक् इत्थम्भूतं वल्लवीनां गोपीनां हरौ कृष्णे कृष्णं प्रतीत्यर्थः प्रवरम् उत्कृष्टं मनोहरमित्यर्थः ललितं विचेष्टितं

८। द्विगुणितवसुलघुभिरचलधृतिरिह ॥ (२५५)
तरणिदुहितृतटरुचिरतरवसति:
अमरमुनिमुखजनविहितनुतिरिह ।
मुररिपुरभिनवजलधररुचितनु:
अचलधृतिरुदयति सुकृति हृदि खलु ॥ (२५६)

९। गरुडरुतं न जौ भ ज त गा यदा स्युस्तदा ॥ (२५७)
अमरमयूरमानसमुदे पयोदध्वनि:
गरुडरुतं सुरारिभुजगेन्द्रसन्त्रासने ।
धरणिभरावतारविधिडिण्डिमाडम्बर:
स जयति कंसरङ्गभुवि सिंहनादो हरे: ॥ (२५८)

---

विशेष: जीयात् सर्वोत्कर्षेण वर्त्तताम्। सुकुमारतयाङ्गानां विन्यासो ललितं विदुरिति दर्पण: ।

(२५५) द्विगुणितेति । इह ग्रन्थे द्विगुणिता: द्वाभ्यां संख्याता वसव: अष्टौ लघव: लघुवर्णा: तै: षोड़शभिर्लघुचरै: इत्यर्थ: अचलधृतिर्नाम वृत्त' स्यात् ।

(२५६) उदाहरति तरणीति । तरणि: सूर्य: तस्य दुहिता यमुना तस्यास्तटे रुचिरतरा अतिमनोहरा इत्यर्थ: वसति: आश्रयस्थानं कुञ्जगृहमिति यावत् यस्य तथोक्त:, अमरै: देवै: मुनिमुखै: ऋषिमुख्यैरित्यर्थ: जनै: विहिता कृता नुति: स्तुतिर्यस्य तथोक्त: देवमुनिभि: स्तूयमान इत्यर्थ: अभिनवो यो जलधरो मेघ: तद्वत् रुचि: कान्तिर्यस्यास्तादृशी तनुर्यस्य तथाभूत: नवनीरदकान्तिरित्यर्थ: तथा अचला धृति: सन्तोषो यस्य तथाभूत: वा अचले पर्वते गोवर्द्धने धृतिर्धारणं यस्य तथाविधः मुररिपु: कृष्ण: इह जगति सुकृतिनां पुण्यवतां हृदि हृदये उदयति खलु तिष्ठत्येव ।

(२५७) गरुड़ेति । यदा पादे नजौ नगणजगणौ ततो भजतगा: भगणजगण-तगणा गुरुश्च स्यु:, तदा गरुड़रुतं नाम वृत्त' स्यात् ।

(२५८) उदाहरति अमरेति । अमरा देवा एव मयूरा: तेषां मानसस्य चित्तस्य मुदे उल्लासाय पयोदध्वनि: मेघगर्जितं सुरादय: असुरा एव भुजगेन्द्रा:

१०। संकथिता भरौ नरनगाश्च (धीरललिता)॥ (२५८)

इति छ० प०

११। पञ्चभकारयुता (ऽश्वगति) र्यदि चान्त्यगुरुः॥ (२६०)

इति छ० प०

१२। नजर भभेन गेन च स्यान् (मणिकल्पलता)॥ (२६१)

इति छ० प०

१३। यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद् (रूपं) नाम॥

(२६२) इति छ० प०

१४। भो रयना नगौ च यस्यां (वरयुवति) रियम्॥ (२६३)

इति छ० प०

---

नागेन्द्रास्तक्षकादयः तेषां सन्त्रासने भीषणे गरुड़रुतं गरुड़स्य पक्षीन्द्रस्य रवः, तथा धरण्या भरावतारविधौ भारहरणव्यापारे डिण्डिमाड़म्बरः वाद्यविशेषनिस्वनः डिण्डिमः स्याट्टिकवादी गुरुमर्दल इत्यपीति शब्दरत्नावली कंसस्य रङ्गभुवि संग्रामाङ्गणे हरेः कृष्णस्य स प्रसिद्धः सिंहनादः जयति।

(२५९) संकथितेति। यस्य पादे भरौ भगणरगणौ तदनु नरनगाः नगणरगणनगणेभ्यः परं गुरुवर्णः, तद्वृत्तं धीरललिता नाम संकथिता उक्ता।

(२६०) पञ्चेति। यदि अन्त्यो वर्णः गुरुः स्यात् तदा पञ्चभिः भकारैः भगणैः युता अश्वगतिर्नाम वृत्तं स्यात्।

(२६१) यस्य पादः नजरभभेन गेन च नगणजगणरगणभगणद्वयात् परं गुरुणा भवति, तत् वृत्तं मणिकल्पलता स्यात्।

(२६२) यस्मिन्निति। यस्मिन् पादे सर्वे गा गुरवः राजन्ते तत् वृत्तं ब्रह्माद्यं रूपं ब्रह्मरूपमित्यर्थः नाम स्यात्।

(२६३) भो रयना इति। यस्यां भगणरगणयगणनगणाः ततश्च नगणौ गुरुश्च इयं वरयुवतिर्नाम वृत्तं स्यात्।

## अत्यष्टिः । [१३१०७२]

### (सप्तदशाक्षरा वृत्तिः)

१ । रसै रुद्रैश्छिन्ना य म न स भला गः शिखरिणी ॥ (२६४)

करादस्य भ्रष्टे ननु शिखरिणीयं व्यतिशिशोः
विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः ।
इति त्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥ (२६५)

२ । ज सौ ज स य ला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ (२६६)

दुरन्तदनुजेश्वरप्रकरदुःस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्य्याशु यः ।
स एष जगतां गतिर्दुरितभारमस्माद्दृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥ (२६७)

---

(२६४) रसैरिति । यस्य पादे यमनसभलागः यगणसगणनगणसगणभगणेभ्यः परं लघुरेको गुरुश्चैकः, सा रसैः षड्भिः रुद्रैः एकादशभिश्च छिन्ना विच्छेदवती शिखरिणी नाम वृत्तं स्यात् ।

(२६५) उदाहरति करादिति । ननु भीः ईदृशि अतिमहत्त्वादतिदुर्वहे शिखरिणि पर्वते गोवर्द्धने इत्यर्थः अस्य अतिशिशोः अतिबालकस्य करात् हस्तात् भ्रष्टे पतिते सति विलीनाः स्मः सत्यं वयं निष्पिष्टा भवामो निश्चितं, तत् तस्मात् अखिलैः सर्वैः अस्माभिः नियतम् अवश्यम् अवधेयम् अवहितैः भाव्यम् । इतीत्थं त्रस्यतां बिभ्यतां गोपानाम् अनुचितैः अयुक्तैः निभृतैः आलापैः अन्योऽन्यसंलापैः जनितं स्मितं बिभ्रत् गोवर्द्धनधरो देवः कृष्णः जगत् अवतु रक्षतु ।

(२६६) जसाविति । यस्य पादे जसौ जगणसगणौ ततो जसयला जगण-सगणयगणा लघुः गुरुश्च स्यात् तत् वृत्तं वसुषु अष्टसु ग्रहेषु नवसु च यतिर्यस्यां तथाभूता पृथ्वी नाम स्यात् ।

(२६७) उदाहरति दुरन्तेति । यः यदुकुले अवतीर्य्य निजलीलया आशु शीघ्रं दुरन्तानां दनुजेश्वराणां दैत्येन्द्राणां प्रकरेण समूहेन दुःस्था या पृथ्वी तस्या भरः तं

३। दिङ्मुनि वंशपत्रपतितं भ र न भ न लगैः॥ (२६८)

नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द! मौक्तिकमिवोत्तममरकतगम्।
एष च तच्चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव॥ (२६९)

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥ *

इति भारवी।

वंशपत्रपतितेति केचित्।

४। मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्मम्॥ (२७०)

---

जहार, जगतां गतिः नाथः स एष हरिः कृष्णः स्तुतयः स्तवाः स्मरणानि च चाटवः प्रियोक्तयः तैः तोषितः तुष्टिं नीतः सन् अस्मादृशां दुरितभारं पापराशिं हरिष्यति नाशयिष्यति।

(२६८) दिङ्मुनीति। यस्य पादौ भरनभनलगैः भगणरगणनगणभगणनगणेभ्यः परं लघुगुरुभ्यां भवति तत् वृत्तं दिङ्मुनि दशसु सप्तसु च विच्छिन्नमित्यर्थः वंशपत्रपतितं नाम भवति।

(२६९) उदाहरति नूतनेति। हे मुकुन्द! कृष्ण! नूतनवंशपत्रेषु पतितं रजनिजललवं निशाशिशिरविन्दुः उत्तममरकतगम् उत्कृष्टमरकतस्थितं मौक्तिकमिव पश्य अवलोकय। एष च चकोरनिकरः मुदितः हृष्टः सन् चन्द्रकिरणैः वान्तम् अमृतकणमिव अवेत्य विदित्वा प्रपिबति।

* सम्प्रतीति। इहाद्रौ विविधाः नानाविधाः शिखरमणीनां शृङ्गस्थितानां रत्नानां रुचः कान्तयः सम्प्रति शरत्समये इत्यर्थः क्षीणपयसि जलशून्ये अतएव लघुनि अतएव भिदां भेदम् उपेयुषि प्राप्तवति जलधरपटले मेघवृन्दे कथमपि शनकैः मन्दं मन्दं लब्धं जन्म यस्य तथोक्तम् उत्पन्नमित्यर्थः खण्डितविग्रहं छिन्नविग्रहं बलभिदः इन्द्रस्य धनुः पूरयितुं सम्पादयितुं विभवः समर्थाः भवन्ति।

प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यैः
मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला।
एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो नः॥ (२७१)

४। न स म र स ला गः षड्वेदैर्हयैर्हरिणी मता॥ (२७२)

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणाद्
व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम्।
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षं विलोलविलोचनम्॥ (२७३)

---

(२७०) मन्दाक्रान्तेति। यस्य पादे मगणो भनौ भगणनगणौ ततौ गुरुद्वयं तदनु यगणद्वयं तत् वृत्तम् अम्बुधिरसनगैः चतुर्भिः षड्भिः सप्तभिश्च विच्छिन्नं मन्दाक्रान्ता नाम स्यात्।

(२७१) उदाहरति प्रेमालापैरिति। बाला मुग्धा कान्ता प्रेमालापैः प्रेमव्यञ्जकवचनैः प्रियाणां वस्तूनां वितरणैः दानैः तथा आलिङ्गनाद्यैः प्रीणिता प्रीतिं गमिता सन्तोषितेत्यर्थः तदनु तदनन्तरं मन्दं यथा तथा न तु दृढमिति भावः आक्रान्ता आसत्तिं नीता सती वश्यतां वशंवदताम् एति प्राप्नोति राधिकायाः सखीनाम् एवम् इत्थं शिक्षावचनमेव सुधा अमृतं तया प्रीतः अतएव स्मितेन सुन्दरं वदनं यस्य तथाभूतः देवकीनन्दनः कृष्णः नः अस्मान् पायात् रक्षतु।

(२७२) नसेति। यस्य पादे नसमरसलागः नगणसगणमगणरगणसगणास्ततो लघुरेको गुरुश्चैक इत्यर्थः तत् वृत्तं षड्भिः चतुर्भिः सप्तभिश्च विच्छिन्नं हरिणी नाम मता कथिता।

(२७३) उदाहरति व्यधितेति। ध्रुवम् उत्प्रेक्षे स विधिः विधाता हरिणीगणात् नेत्रं नीत्वा व्रजमृगदृशां व्रजाङ्गनानां सन्दोहस्य समूहस्य उल्लसन्ति यानि नयनानि तेषां श्रीः शोभा तां व्यधित कृतवान्। यत् यस्मात् अयं व्रजमृगदृशां सन्दोहः दूर्वाश्यामे दूर्वावत् श्यामले अतएव बद्धा कृता आकाङ्क्षा यस्य तादृशं मुरारिकलेवरे कृष्णदेहे अधिकं विलोलविलोचनं सतृष्णनयनं व्यकिरत् न्यक्षिपत्। दूर्वासु मृगीणां दृष्टिः सस्पृहं पततीति भावः।

६। यदि भवतो न जौ भ ज ज ला गुरु नर्दटकम् ॥ (२७४)

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम्।
विभुमभिनौति कोऽपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्दटकेन कविः ॥ (२७५)

७। हयऋतुसागरैर्यतियुतं यदि कोकिलकम् ॥ (२७६)

लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लसितम्।
अलिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥ (२७७)

८। वेदर्त्वश्वैर्म भ न म य ला गश्चेत्तदा हारिणी ॥ (२७८)

---

(२७४) यदीति। यदि नजौ नगणजगणौ भवतः, तथा भजजलाः भगणजगणा लघुगुरुश्चैकः प्रतिपादमिति शेषः तदा नर्दटकं नाम वृत्तं स्यात्।

(२७५) उदाहरति व्रजेति। व्रजवनिताः गोपाङ्गना एव वसन्तलतिकाः वासन्त्यो लताः तासु विलसन् मधुपः भ्रमरः तं प्रणम्राणां जनानां वाञ्छितकल्पतरुम् अभीष्टप्रदमित्यर्थः विभुं कृष्णं कोऽपि सुकृती पुण्यवान् कविः रुचिरेण मनोज्ञेन पदावलीघटितेन नर्दटकेन छन्दोविशेषेण मुदितेन हृदा अभिनौति अभिष्टौति।

(२७६) हयेति। यदि नर्दटकं हय ऋतुसागरैः सप्तभिः षड्भिः चतुर्भिश्च यतिर्विरामः तद्युतं भवति तदा कोकिलकं नाम स्यात्।

(२७७) उदाहरति लसदिति। ननु सखि ! लसन्ती अरुणे रक्ते ईक्षणे यस्य तथोक्तं मधुरेण भाषणेन वचनेन यः मोदः सन्तोषः तं करोतीति तथाभूतं मधुसमयागमे वसन्तागमे सरसकेलिभिः मधुरविहारैः उल्लसितम् अलिर्भ्रमरः तद्वत् ललिता मनोहारिणी द्युतिर्यस्य तादृशं श्यामवर्णमित्यर्थः तथा रविसुतायाः यमुनायाः वने कोकिलकं कोकिलस्वरूपं तं नन्दसुतं कृष्णं हृदि मनसि कलयामि स्मरामि।

(२७८) वेदर्त्वश्वैरिति। चेत् यदि मभनमयला मगणभगणनगणमगणयगणाः लसतौ

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम्।
गौरी कान्तिः प्रकृतिरुचिरा रम्याङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा मनोहारिणी॥ (२७९)

१। भाराक्रान्ता म भ न र स ला गुरुः श्रुतिषड्हयैः॥ (२८०)

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणात्
कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति।
इत्यावृण्वन् जयति जलदस्वनाकुलवल्लवी-
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः॥ (२८१)

---

घुः, तदनु गुरुर्भवति प्रतिपादमिति शेषः तदा वेदर्त्वश्वैः चतुर्भिः षड्भिः सप्तभिश्च वर्णैः विच्छिन्नं वृत्तं हारिणी नाम स्यात्।

(२७९) उदाहरति। यस्या इति। यस्याः श्रीशालिनी श्रिया सौन्दर्येण शालिते शोभिते इति तयोक्ते लोचने नित्यं सततं श्रुतिकुवलये कर्णयोर्नीलोत्पलभूते विभूषणे इत्यर्थः, अधरकिसलये अधरपल्लवे स्वीयः नैसर्गिकः रागः लाक्षारसैरारञ्जनं तथा प्रकृतिरुचिरा स्वभावरम्या गौरी कान्तिः रम्यस्य अङ्गरागस्य छटा दीप्तिः, सा राधा कंसारेः कृष्णस्य मनोहारिणी कथं न अजनि? अपि तु मनोहारिण्येवाजनीत्यर्थः।

(२८०) भाराक्रान्तेति। यस्य पादे मभनरसला मगणभगणनगणरगणसगणास्ततो लघुर्गुरुश्चैकः तत् वृत्तं चतुर्भिः षड्भिः सप्तभिश्च वर्णैः विच्छिन्नं भाराक्रान्ता नाम स्यात्।

(२८१) उदाहरति। हरिः कृष्णः गुरुं पितरं गुरुजनं वा विलोक्य इह गिरीन्द्रस्य गोवर्द्धनस्य विधारणात् मम इयं तनुः शरीरं भाराक्रान्ता मन्थरेत्यर्थः सती कम्पं धत्ते धारयति कम्पते इत्यर्थः तथा श्रमजलकणं खेदवारिविन्दुं परिमुञ्चति त्यजति खेदः स्रवतीति भावः इति इत्थं जलदस्वनेन मेघध्वनिना आकुलानां भीतानां वल्लवीनां गोपीनां संश्लेषोत्थम् आलिङ्गनजातं स्मरविलसितं कामविकारकम्पादिसात्त्विकभावमिति भावः आवृण्वन् गोपयन् जयति सर्वोत्कर्षेण वर्त्तते।

१०। रसयुगहययुङ् नौ म्रौ सोलगौ हि यदा (हरिः)॥

(२८२) इति छ० प०

११। भवेत् (कान्ता) युगरसहयै र्यभौ नरसालगौ॥ (२८३)

इति छ० प०

१२। ससजै (रतिशायिनी) भजपरै र्गुरुभ्याम्॥ (२८४)

इति छ० प०

१३। अवेहि (पञ्चचामरं) जरौ जरौ जगौ लघुश्च॥ (२८५)

इति छ० प०

---

धृतिः। [२६२१४४]

(अष्टादशाक्षरा वृत्तिः)

१ स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ न यौ यौ॥(२८६)

---

(२८२) रसेति। यदा नौ नगणौ म्रौ मगणरगणौ ततः सगणः ततश्च लघुर्गुरुश्चैकः प्रतिपादमिति शेषः तदा रसयुगहययुक् षड्भिः चतुर्भिः सप्तभिश्च विच्छिन्नमित्यर्थः वृत्तं हरिर्नाम स्यात्।

(२८३) भवेदिति। यस्य पादे यभौ यगणभगणौ, नरसा नगणरगणसगणाः ततो लघुर्गुरुश्चैकः, तत् वृत्तं युगरसहयैः चतुर्भिः षड्भिः सप्तभिश्च विच्छिन्नमित्यर्थः कान्ता नाम भवेत्।

(२८४) ससजैरिति। यस्य पादः ससजैः सगणसगणजगणैः भजपरैः ततो भगणजगणाभ्यां ततश्च गुरुभ्यां भवति तत् वृत्तम् अतिशायिनी नाम स्यात्।

(२८५) अवेहीति। यस्य पादे जरौ जगणरगणौ ततश्च जरौ जगणरगणौ, ततो जगौ जगणो गुरुर्लघुश्च, तद्वृत्तं पञ्चचामरम् अवेहि जानीहि।

(२८६) स्यादिति। यस्य पादे म्तौ मगणतगणौ, नयौ नगण यगणौ ततो यौ यगणौ स्तः, तत् वृत्तं भूतर्त्वश्वैः पञ्चभिः षड्भिः सप्तभिश्च विच्छिन्नं कुसुमितलतावेल्लिता नाम स्यात्।

क्रीड़त् कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यैः
वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥ (२८७)

ग्राम्याजानूपं पिशितलवणं शुष्कशाकं नवान्नं
गौड़ं पिष्टान्नं दधि सकृशरं विज्जलं मद्यमम्लम् ॥
धाना वल्लूरं समसनमथो गुर्वसात्म्यं विदाहि
स्वप्नञ्चारात्रौ श्वयथुगदवान् वर्जयेदङ्गनाञ्च ॥ (२८८)

इति वैद्यके ।

२ । न ज भ ज रैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ॥ (२८९)

---

(२८७) उदाहरति क्रीड़दिति । क्रीड़न्त्यः उद्गच्छन्त्यः कालिन्द्याः यमुनायाः या ललित लहर्य्यः रुचिरतरङ्गाः तासां वारिभिः जलैः सह खेलद्भिः वहद्भिरित्यर्थः दाक्षिणात्यैः दक्षिणदिग्भवैः वातैः मलयसमीरणैरित्यर्थः मन्दं मन्दं वेल्लिता कम्पिता तथा भृङ्गालीनां मधुकरनिचयानां गीतैः किसलयाः पल्लवा एव कराः तेषाम् उल्लासितैः उत्क्षेपणैः अभिनयैरिति भावः लास्यलक्ष्मीं नर्त्तनश्रियं तन्वाना विस्तारयन्ती कुर्वतीत्यर्थः कुसुमितलता पुष्पितलता चक्रपाणेः कृष्णस्य चेतः मानसं रभसतरलं हर्षलोलं चकार ।

(२८८) ग्राम्येति । पिशितं मांसं लवणमिति पिशितलवणं समाहारद्वन्द्वः । ग्राम्यम् अजम् आनूपञ्चेति तथोक्तं तथा च ग्राम्यं छागादिमांसं लवणञ्च यत् पाकेन निर्वृत्तम्, अजं जलजातं कच्छपादिमांसं लवणं सामुद्रञ्च तथा आनूपं शूकरादिमांसं समुद्रतीरभवं लवणञ्च सम्भरीति ख्यातं शुष्कं शाकं नवान्नं नवौदनं गौड़ं गुड़निष्पन्नं पिष्टकं सकृशरं कृशरैः तिलतण्डुलादिकृतैः लड्डुकादिभिः सहितमित्यर्थः दधि, विज्जलं पिच्छिलद्रव्यं पायसादीत्यर्थः मद्यम् अम्लं धाना अङ्कुरितभृष्टयवान् वल्लूरं शुष्कमांसं समसनं गुरु दुष्पचम् असात्म्यम् असह्यं विदाहि अत्युष्णमित्यर्थः द्रव्यम् अरात्रौ दिवसे स्वप्नं निद्राम् अङ्गनां स्त्रियञ्च श्वयथुगदवान् शोफव्याधियुक् नरः वर्जयेत् त्यजेत् ।

(२८९) नजेति । यस्य पादः नजभजरैः रेफसहितैः नगणजगणभगणजग-

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम्।
सुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रज सखे! सुखाय वृन्दावनम्॥ (२९०)

अहृत धनेश्वरस्य युधि यः समेतमायो धनम्
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम्।
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथ वेह सम्पन्न कम्॥ (२९१)

इति भट्टौ।

२। इह न न र चतुष्कसृष्टन्तु नाराचमाचक्षते॥ (२९२)

---

योऽथः परं रगणयुगलेन भवति तत् वृत्तं शिवैरेकादशभिः हयैः सप्तभिश्च विच्छिन्नमित्यर्थः नन्दनं नाम स्यात्।

(२९०) उदाहरति तरणीति। हे सखि! तरणिसुताया यमुनायाः तरङ्गपवनैः सलीलं यथा तथा आन्दोलितं वीजितं मधुरिपोः कृष्णस्य पादपङ्कजरजोभिः चरणपद्मरेणुभिः सुपूतम् अतिशयेन पवित्रीकृतं पृथ्वीतलं भूमिर्यस्य तादृशं तथा सुरहरस्य कृष्णस्य चित्रा मनोज्ञा याः चेष्टितकलाः क्रीड़ाविलसितानि तासां कलापस्य समूहस्य संस्मारकम् अतएव क्षितितलनन्दनं पृथिव्या नन्दनकाननभूतं वृन्दावनं सुखाय व्रज गच्छ।

(२९१) आहृतेति। यः युधि युद्धे समेतमायः मायावी सन्नित्यर्थः धनेश्वरस्य कुवेरस्य धनम् अहृत हृतवान् विबुधैः देवैः कृतम् उत्तमम् अत्युत्कटम् आयोधनं युद्धं येन तादृशं निह्नुता निरस्ता ह्रीर्लज्जा येन तथाभूतेन विभवमदेन ऐश्वर्य्यमत्ततया अतिमात्रम् अतिशयेन सम्पन्न एव सम्पन्नकः तं युक्तमित्यर्थः तं रावणं विलोक्य इतः प्राप्तः आगत इत्यर्थः, अथवा अधिगता प्राप्ता सम्पद् इह जगति कं जनं सत्पथात् साधुमार्गात् न व्यथयति न भ्रंशयति? अपि तु सर्वमेव भ्रंशयतीत्यर्थः।

(२९२) ननेति। इह छन्दोग्रन्थे ननरचतुष्कसृष्टं न द्वयात् परं रगणचतुष्टयेन सृष्टं रचितं वृत्तं नाराचम् आचक्षते कथयन्ति।

दिनकरतनयातटीकानने चारु सञ्चारिणी
श्रवणनिकुटकृष्टमेणेक्षणा कृष्ण ! राधा त्वयि।
ननु विकरति नेत्रनाराचमिषातिहृच्छेदनं
तदिह मदनविभ्रमोद्भ्रान्तचित्ता वधत्स्व द्रुतम् ॥(२९३)

रघुपतिरपि जातवेदो विशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संक्रमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ (२९४)

इति रघौ।

४। मन्दाक्रान्ता नयुगलजठरा कीर्त्तिता चित्रलेखा ॥ (२९५)

---

(२९३) उदाहरति दिनकरेति। ननु सम्बोधने हे कृष्ण ! दिनकरस्य सूर्य्यस्य या तनया यमुनाख्याः तटीकानने तीरनिकुञ्जे चारु सविलासं यथा तथा सञ्चारिणी एणेक्षणा हरिणाक्षी एषा राधा मदनविभ्रमेण कामविलसितेन उद्भ्रान्तं विचलितमित्यर्थः चित्तं यस्यास्तादृशी सती श्रवणनिकटकृष्टम् आकर्णकृष्टमित्यर्थः अतिहृच्छेदनम् अतिशयेन हृदयवेधनं नेत्रनाराचं कटाक्षरूपमस्त्रविशेषं त्वयि विकिरति निक्षिपति, तत् तस्मात् द्रुतं शीघ्रम् अवधत्स्व अवहितो भव प्रतिकुर्वित्यर्थः।

(२९४) रघुपतिरिति। रघुपतिरपि रामोऽपि जातवेदसि अग्नौ विशुद्धां प्रियां सीतां प्रगृह्य प्रियसुहृदि विभीषणे वैरिणः रावणस्य श्रियं राजलक्ष्मीं संक्रमय्य समर्प्येत्यर्थः रविसुतसहितेन सुग्रीवसहितेन ससौमित्रिणा लक्ष्मणेन तेन विभीषणेन अनुयातः तथा भुजाभ्यां विजितं यत् विमानरत्नं पुष्पकाख्यं देवयानमित्यर्थः तत्राधिरूढः सन् पुरीं राजधानीम् अयोध्यां प्रतस्थे।

(२९५) मन्दाक्रान्तेति। मन्दाक्रान्ता मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ गौ ययुग्ममित्युक्तलक्षणा नयुगलं नगणद्वयं जठरे यस्यास्तादृशी चेत् चित्रलेखा नाम कीर्त्तिता भवति। तथा च मन्दाक्रान्तायां पञ्चलघुभ्यः परमेको लघुर्देय इति भावः। न मरलवयुतेत्यपि पाठः तत्र नगणात् परं लवयुतेत्यर्थः।

शङ्केऽमुष्मिन् जगति मृगदृशां साररूपं यदासीत्
आकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि।
नैतादृक् चेत् कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतन्तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम्॥ (२९६)

५। मः सो जः स त सा दिनेश ऋतुभिः शार्दूलललितम्॥ (२९७)

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितम्
यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु।
सन्तोषं परमन्तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः॥ (२९८)

---

(२९६) उदाहरति शङ्के इति। शङ्के उत्प्रेक्षे, अमुष्मिन् जगति मृगदृशां मृगनयनानां रमणीनां यत् साररूपं सौन्दर्यमित्यर्थः। आसीत् वेधसा विधात्रा इद सारम् आकृष्य संगृह्येत्यर्थः सा व्रजयुवतिसभा व्रजाङ्गनासमाजः व्यधायि विहिता सृष्टेत्यर्थः। चेत् यदि एतादृक् एष प्रकारः न भवतीति शेषः, तदा कथम् उदधिसुतां लक्ष्मीम् अन्तरेण विना अच्युतस्य कृष्णस्य चित्रलेखा चित्रलिखित तद्वत् अद्भुतायाम् आश्चर्यरूपायां तस्यां व्रजयुवतिसभायां नयनयुगं प्रीतम् अभूत् लक्ष्मीसौन्दर्य्यादपि व्रजाङ्गनानां सौन्दर्य्यमधिकमिति लक्ष्मीं विहाय कृष्णः तासु अनुरागी आसीदिति भावः।

(२९७) म इति। यस्य पादे मगणमगणजगणा ततः सगणतगणसगणाः, तत् वृत्तं दिनेशैः सूर्य्यैः द्वादशभिरित्यर्थः ऋतुभिः षड्भिश्च वर्णैः विच्छिन्नमित्यर्थः शार्दूलललितं नाम स्यात्।

(२९८) उदाहरति कृत्वेति। यः कंस एव मृगः कंसमृगः तस्मिन् शार्दूलः व्याघ्रः शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः तद्वत् ललितं सुन्दरं पराक्रमविधि विक्रमव्यापारं क्षितिभारकारिषु चैद्यप्रभृतिषु शिशुपालप्रमुखेषु दुर्दान्तेषु राजसु दरं भयं तथा देवनिवहे देववृन्दे परमं सन्तोषं चक्रे कृतवान् त्रैलोक्यशरणं त्रिभुवनगतिः अपारमहिमा लक्ष्मीप्रियतमः श्रीपतिः सः कृष्णः नः अस्माकं श्रेयः कल्याणं तनोतु विस्तारयतु।

६ । मात्सो जौभरसंयुतौ करिवाणखै (हरिणप्लुता) ॥ (२९९)
इति छ० प०

७ । पञ्चभकारयुता (ऽश्वगति) र्यदि चान्त्य सरचिता ॥ (३००)
इति छ० प०

८ । (सुधा) तर्कैस्तर्कैर्भवति ऋतुभि र्यौ मो न सतसाः ॥
(३०१) इति छ० प०

९ । वर्णाश्वै र्मननलत सकैः कीर्त्तिता (चित्रलेखेयम्) ॥
(३०२) इति छ० प०

१० । भादरनना नसौ (भ्रमरपदक) मिदमभिहितम् ॥
(३०३) इति छ० प०

११ । (शार्दूलं) वद मासषट्कयति मः सोजसो रोमश्चेत् ॥
(३०४) इति छ० प०

---

(२९९) मात्स इति। मगणात् सगणः ततो जौ जगणौ तदनु भगणरगणौ यस्य पादे स्युः, तत् वृत्तं करिवाणखैः अष्टभिः पञ्चभिः विरामैरुपलचितं हरिणप्लुता नाम स्यात्।

(३००) पञ्चेति। पञ्चभिर्भकारैः भगणैः युता यदि च अन्त्ये सरचिता सगणनिर्मिता स्यात् तदा अश्वगतिर्नाम वृत्तं भवति।

(३०१) सुधेति। यस्य पादे यगणः तदनु नगणसगणतगणसगणाः, तद्वृत्तं तर्कैः तर्कैः षड्भिः षड्भिः तथा ऋतुभिः षड्भिः विच्छिन्नं सुधा नाम स्यात्।

(३०२) वर्णाश्वैरिति। यस्य पादः मगणनगणयुगलतगणयुगलसगणैः तद्वृत्तं वर्णाश्वैः एकादशभिः सप्तभिश्च वर्णैः छिन्नं चित्रलेखा इयं कीर्त्तिता।

(३०३) भादिति। यस्य पादे भात् भगणात् परं रगणनगणचयसगणाः स्युः, इदं वृत्तं भ्रमरपदकम् अभिहितम्।

(३०४) शार्दूलमिति। चेत् यदि मगणः, ततः सगणजगणसगणास्तदनु रगणौ मगणश्च प्रतिपादमिति शेषः भवति, मांसेषु द्वादशसु षट्सु च यतिर्विरामो यत्र तथाभूतं वृत्तं शार्दूलं नाम वद।

१२। अर्थाश्वाश्वै र्मभनयरयुगैर्वृत्तं मतं (केसरम्) ॥ (३०५)
इति छ०प०

१३। म्भौन् जौ भ्रौ चे (चल) मिदमुदितं युगैर्मुनिभिःस्वरैः
(३०६) इति छ० प०

१४। सैका वसुविरति स्तनौ रैश्चतुर्भिर्युता (लालसा) ॥
(३०७) इति छ०प०

१५। भवति नयुगलं रभौ रौ दशभि (र्गजेन्द्रलता) ॥ (३०८)
इति छ० प०

१६। तद्भूतर्त्वश्वै र्मौ भ्मौ विरति श्चेत् (सिंहविस्फूर्जितं यौ ॥
(३०९) इति छ० प०

१७। सौं जजौ भरसंयुतौ करिवाणखै (र्हरनर्त्तनम्) ॥ (३१०)
इति छ० प०

---

(३०५) अर्थाश्वाश्वैरिति। यस्य पादः मगणभगणनगणमगणरगणयुगलैः भवति, तत् वृत्तं अर्थाश्वाश्वैः अर्थैः पुरुषार्थैः धर्मकामार्थमोचैश्चतुर्भिरिति भावः अश्वैः सप्तभिः पुनश्च अश्वैः सप्तभिः विच्छिन्नं केसरं नाम मतम्।

(३०६) म्भाविति। चेत् यदि मगणभगणमगणजगणभगणरगणाः भवन्ति, प्रतिपादमिति शेषः इदं वृत्तं युगैश्चतुर्भिः मुनिभिः स्वरैः सप्तभिश्च विच्छिन्नं चलं नाम उदितम् उक्तम्।

(३०७) सैकेति। तनौ तगणनगणौ ततश्चत्वारो गणाः यस्य पादे भवन्ति, सा एका वसुविरतिः अष्टवर्णविरामो लालसा नाम वृत्तं स्यात्।

(३०८) यस्य पादे न युगलं रभौ रगणभगणौ ततश्च रगणद्वयं, सा दशभिः वर्णैर्विच्छिन्नेति शेषः गजेन्द्रलता नाम वृत्तं भवति।

(३०९) तद्भूतेति। यस्य पादे मगणौ ततो भगणमगणौ ततश्च यगणौ सः तत् वृत्तं भूतर्त्वश्वैः पञ्चभिः षड्भिः सप्तभिश्च विरतिश्चेत् तदा सिंहविस्फूर्जितं नाम स्यात्।

(३१०) साविति। यस्य पादे रगणसगणौ ततो जगणद्वयं ततश्च भगणरगणौ, तत् वृत्तं करिवाणखैः अष्टमपञ्चपञ्चभिः विच्छिन्नं हरनर्त्तनं नाम स्यात्।

१८। इदं (क्रौड़ाचक्रं) सदीर्घं समस्तै र्यकारैः समेतम्॥
(३११) इति छ० प०

१९। वेदाङ्गान्तै र्मभनययुगैः स्या दियं (चन्द्रलेखा)॥ (३१२)
इति छ० प०

२०। (हीरक) मुदितं भसनजनै रिहरगणो ऽन्ततः॥ (३१३)
इति छ० प०

---

अतिधृतिः। [५२४२८८]

(ऊनविंशत्यक्षरा वृत्तिः)

१। रसर्त्त्वश्वैर्य्मौन्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात्॥
(३१४)

कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेकाः
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः।
निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्
प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्किमन्यत्॥ (३१५)

---

(३११ इदमिति। यस्य पादे यगणः ततो सगणः तदनु यगणत्रयं तत् क्रीड़ाचक्रं नाम वृत्तं स्यात्।

(३१२) वेदाङ्गान्तैरिति। यस्य पादः मगणभगणनगणयगणत्रयेण भवति इयं चतुर्भिः सप्तभिश्च विच्छिन्ना चन्द्रलेखा नाम स्यात्।

(३१३) हीरकमिति। इह छन्दोग्रन्थे यस्य पादः भगणसगणनगणजगणनगणाततो रगणः, तत् वृत्तं हीरकं नाम उदितं कथितं स्यात्।

(३१४) रसेति। यस्य पादे यगणमगणौ ततः नगणसगणौ ततो रगणद्वयं ततश्च गुरुः, तत् वृत्तं रसर्त्त्वश्वैः रसैः षड्भिः ऋतुभिः षड्भिः अश्वैः सप्तभिश्च विच्छिन्नं मेघविस्फूर्जिता नाम स्यात्।

(३१५) उदाहरति कदम्बेति। विपिनपवनाः वनवायवः कदम्बानां नीपकुसुमानाम् आमोदेन सौरभेण आढ्याः युक्ताः, केकिनः मयूराः कान्ता रम्याः

उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठीकण्ठीरवरवलवत्रासितप्रोषितभाः।
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केल्लिमल्ली
चलद्वल्लीहल्लीसकसुरभयश्चण्डि ! चञ्चन्ति वाताः॥ (३१६)
इति कस्यचित्॥

२। भवेत्सैव छाया तयुगगयुता स्याद् द्वादशान्ते यदा॥ (३१७)
अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नस्तवकिततनुश्चित्रांशुकालम्बितः।

---

केकाः स्वरविशेषाः येषां तथाभूताः, कन्दल्यः भूमिकदलीविशेषाः विनिद्राः विकसिताः, दर्दुराः भेकाः दिशि दिशि प्रतिदिशं इत्त उद्गतः नादः ध्वनिः येषां तथाभूताः, निशा रजनी नृत्यन्तीनां विद्युतां सौदामिनीनां विलसितेन स्फुरणेन लसद्भिः दीप्यमानैः मेघैः विस्फूर्जिता ध्वनिता तदेवं समये चेत् यदि असौ दनुजदलनः कृष्णः प्रियः स्वाधीनः वशे वर्त्तते इति भावः तदा अस्मात् सुखादिति शेषः अन्यत् परं राज्यं राजत्वसुखं किम् ? न किमपीत्यर्थः। कस्याश्चित् गोप्या उक्तिरियम्।

(३१६) उदञ्चदिति। हे चण्डि ! अतिकोपने ! चण्डस्त्वत्यन्तकोपन इत्यमरः। चैत्रे मधौ उदञ्चन्त्यः उद्गच्छन्त्यः कावेर्य्या नद्या या लहरयस्तरङ्गाः तासु परिष्वङ्गः आश्लेषः, स एव रङ्गः विलासः तस्मिन् तदर्थमित्यर्थः लुठन्तः एतेनैषां शैत्यं दर्शितम्। कुहूकण्ठी कोकिला सैव कण्ठीरवः सिंहः तस्य रवलवेन शब्दलेशेनापि त्रासिता भीषिता प्रोषिता विरहिण्य एव इभा हस्तिनः यैः तथाभूताः एतेन उद्दीपकत्वोक्त्या वायूनां मान्द्यं सूचितम्। तथा मैत्रावरुणेः अगस्त्यस्य तरुणी कान्ता लोपामुद्रेति यावत् तस्याः केलिकङ्केल्लिः क्रीड़ाशोकतरुः मल्ली मल्लिका, चलवल्ली चञ्चला लता तासां हल्लीसकं नृत्यं कम्पनमित्यर्थः तेन सुरभयः सुगन्धाः एतेन सौगन्ध्यं सूचितम्। तदेवं त्रिविधगुणशालिनो वाताः चञ्चन्ति वहन्ति तस्मात् मानं त्यजेति भावः।

(३१७) भवेदिति। सैव मेघविस्फूर्जितैव यदा यदि द्वादशान्ते द्वादशवर्णान्ते तगणद्वयेन ततो गुरुणा युता स्यात् तदा छाया नाम वृत्तं भवेत्।

न यस्याङ्घ्रेश्छायामुपगतवतां संसारतीव्रातपः
स्तनोति प्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः॥ (३१८)

१९। सूर्य्याश्वै र्मः स ज स्तताः सगुरवः शार्दूलविक्रीड़ितम्॥
(३१९)

गोविन्दं प्रणमोत्तमाङ्ग! रसने! तं घोषयाहर्निशं
पाणी! पूजयतं मनः! स्मर पदे! तस्यालयं गच्छतम्।
एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं
न प्रेक्षे भवतां क्षते भवमहाशार्दूलविक्रीड़ितम्॥ (३२०)

---

(३१८) उदाहरति अभीष्टमिति। लसद्भिर्विराजद्भिः दीर्भिः भुजैरेव चारुशाखाभिः उज्ज्वलः स्फुरद्भिर्दीप्यमानैर्नानारत्नैः स्तवकिता रञ्जिता तनुः मूर्त्तिर्यस्य तथाभूतः तथा चित्रांशुकैः विचित्रवसनैः आलम्बितः आवृतः यः जुष्टः सेवितः सन् अभीष्टं फलमिति शेषः। वितरति ददाति, यस्य अङ्घ्रेः चरणस्य मूलस्य च छायां आश्रयम् अनातपञ्च उपगतवतां प्राप्तवतां संसार एव तीव्रः उत्कटः आतपः सौरताप इत्यर्थः प्रोत्तापं प्रकृष्टम् आध्यात्मिकादितापम् उत्तापञ्च न तनोति न विस्तारयति अपि तु निवारयतीति भावः स कंसारिः कृष्ण एव कल्पद्रुमः जगत् अवतात् रक्षतु।

(३१९) सूर्य्याश्वैरिति। यस्य पादे मसजसतताः सगुरवः मगणसगणजगणसगणतगणद्वयात् परं गुरुः, तत् वृत्तं सूर्य्याश्वैः द्वादशभिः सप्तभिश्च विच्छिन्नमित्यर्थः शार्दूलविक्रीड़ितं नाम स्यात्।

(३२०) उदाहरति गोविन्दमिति। हे उत्तमाङ्ग! शिर! त्वं गोविन्दं कृष्णं प्रणम, हे रसने! जिह्वे! त्वं तं गोविन्दम् अहर्निशं सततं घोषय वद। हे पाणी भुजौ! युवां गोविन्दं पूजयतं, हे मनः त्वं गोविन्दं स्मर चिन्तय, हे पादौ! चरणौ! युवां तस्य गोविन्दस्य आलयं मन्दिरं गच्छतः। हे शीर्षादयः! उत्तमाङ्गादयः! चेत् यदि यूयम् एवम् इत्थं पूर्वोक्तप्रकारं मम हितं कुरुथ, तत् तदा ध्रुवं निश्चितं भवतां क्षते साहाय्ये इति भावः भवः संसार एव महाशार्दूलः वृहद्व्याघ्रः तस्य विक्रीड़ितं विचेष्टितं न प्रेक्षे न पश्यामि।

४। म्रभ्नौ यौ नौ गुरुश्चेत् स्वरमुनिकरणैराह सुरसाम्॥
(३२१)

कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्
कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः।
गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानैः प्रचयकृतसुखं व्यस्मरदसौ॥ (३२२)

५। मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्॥
(३२३)

शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्ताम्।
मुग्धामोदेन स्थगितदशदिगाभोगमाकृष्टभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम॥ (३२४)

---

(३२१) म्राविति। यस्य पादे मगणरगणौ भगणनगणौ ततो यगणनगणौ ततश्च चेत् यदि गुरुः भवति, तदा स्वरमुनिकरणैः सप्तभिः सप्तभिः पञ्चभिश्च विच्छिन्नं सुरसां नाम वृत्तम् आह कथयति।

(३२२) उदाहरति कामक्रीड़ेति। असौ गोविन्दः कृष्णः मधुसमयस्य वसन्तकालस्य यः समारम्भः उदयः तेन यः रभसः हर्षः उल्लास इति यावत् रभसो वेगहर्षयोरित्यमरः। तस्मात् कामक्रीड़ायां सुरतविहारे सतृष्णः साभिलाषः अतएव कालिन्दी यमुना तस्याः कूले तीरे यत् कुञ्जं लतादिपिहितं वनं तस्मिन् निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः। विहरणकुतुकेन विहारौत्सुक्येन आकृष्टं हृदयं यस्य तथाभूतः सन् वल्लवीनां गोपीनां सुरसां मधुरास्वादाम् अधररससुधां प्राप्य पीयूषस्य अमृतस्य पानैः प्रचुरम् अत्यन्तं कृतम् अनुभूतं सुखं व्यस्मरत् विसस्मार इति शङ्के उत्प्रेक्षे।

(३२३) मौगाविति। यस्य पादे मगणो गुरुद्वयं ततो नगणौ ततस्तगणौ ततश्च गुरुद्वयं भवति तत् वृत्तं स्वरहयतुरगैः पञ्चभिः सप्तभिः सप्तभिश्च विच्छिन्नं फुल्लदाम नाम प्रसिद्धं विख्यातं भवति।

६। नयुगलगलघु निरन्तरो यदा स (पञ्चचामरः)॥ (३२५)
इति छ० प०

७। वृत्तं (विम्बाख्यं) शरमुनितुरगै र्म्तौ न्सौ ततौ चेद्गुरुः॥
(३२६) इति छ० प०

८। रसैः षड्भि र्लोकै र्यमनसजजा गुरु (र्मकरन्दिका)॥
(३२७) इति छ० प०

९। इनाश्वैः स्याद् यभनयजजगाः कीर्त्तिता (मणिमञ्जरी)॥
(३२८) इति छ० प०

---

(३२४) उदाहरति शश्वदिति। शश्वत् सततं लोकानां जगतां प्रकटितं कृतं कदनं पीड़नं येन तादृशं कंसं ध्वस्तं निहतमालोक्य हृष्यत् हर्षं गच्छत् चेतो येषां तथोक्तैः प्रीतैरित्यर्थः व्योमसंस्थैः अन्तरीक्षचारिभिः त्रिदिवं स्वर्गः वसतिर्येषां तैः स्वर्गवासिभिर्देवैः विमुक्तं वृष्टं मुग्धेन सुन्दरेण आमोदेन स्थगितः पूरितः दशदिशानाम् आभोगः विस्तारः येन तथाभूतम् आभोगः परिपूर्णतेत्यमरः। आहूता भृङ्गा भ्रमरा येन तथाभूतम् अनुपमम् अतुल्यं स्वस्तरोः स्वर्गतरोः पारिजातस्य फुल्लं विकसितं दाम माल्यं दैत्यारेः कृष्णस्य मौलौ शिरसि न्यपतत् निपपात।

(३२५) न युगलेति। यदा न युगलगलघु नगणद्वयात् परं गुरुर्लघुश्च निरन्तरः तदा स पञ्चचामरः नाम वृत्तं स्यात्।

(३२६) वृत्तमिति। यस्य पादे मतौ मगणतगणौ नसौ नगणसगणौ ततः तगणद्वयं तदनु गुरुश्चेत् भवति तत् वृत्तं शरमुनितुरगैः पञ्चभिः सप्तभिः सप्तभिश्च विच्छिन्नं विम्बाख्यं विम्बं नाम स्यात्।

(३२७) रसैरिति। यस्य पादे यगणमगणनगणसगणेभ्यः परं जगणद्वयं ततश्च गुरुर्भवति, तद्वृत्तं रसैः षड्भिः षड्भिः लोकैः सप्तभिश्च विच्छिन्नमित्यर्थः मकरन्दिका नाम स्यात्।

(३२८) इनाश्वैरिति। यस्य पादे यभनयजजगाः यगणभगणनगणयगणजगणद्वयात् परं गुरुः भवति तत् वृत्तम् इनाश्वैः इनैः सूर्य्यैः द्वादशभिरित्यर्थः तथा अश्वैः सप्तभिश्च विच्छिन्नं मणिमञ्जरी नाम कीर्त्तिता स्यात्।

१०। गजाब्धितुरगैर्जसौ जसतभागश्चेत् (समुद्रतता) ॥ (२२९)

इति छ० प०

---

कृतिः। [१०४८५७६]

( विंशत्यक्षरा वृत्तिः। )

१। ज्ञेया सप्ताश्वषड्भिर्मरभनययुताभ्लौ गः सुवदना ॥ (२३०)

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका।
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो! राधा मम सखी ॥ (२३१)

---

(२२९) गजेति। यस्य पादे जसौ जगणसगणौ ततो जसतभाः जगणसगणतगणभगणाः ततश्च चेत् यदि गुरुः, तदा तद्वृत्तं गजाब्धितुरगैः अष्टभिः चतुर्भिः सप्तभिश्च विच्छिन्नं समुद्रतता नाम स्यात्।

(२३०) ज्ञेयेति। यस्य पादे मरभनययुता भ्लौ गः मगणरगणभगणनगणयगणेभ्यः परं भगणो लघुर्गुरुश्च, तत् वृत्तं सप्ताश्वषड्भिः सप्तभिः सप्तभिः षड्भिश्च वर्णैः विच्छिन्नमित्यर्थः सुवदना नाम ज्ञेया।

(२३१) उदाहरति प्रत्याहृत्येति। ननु सम्बोधने। हे नरकरिपो! कृष्ण! सा मम सखी सुवदना राधा कामार्त्तिं मदनपीड़ां त्यक्तुकामा सती त्वत्तः इतरः अन्यः यो विषयः इन्द्रियग्राह्यपदार्थः तस्मात् इन्द्रियाणि चित्तवृत्तीरित्यर्थः आहृत्य निवार्य्येत्यर्थः नासाग्रे नयनं यस्यास्तथाभूता परतरपुरुषं परमात्मानं परपुरुषञ्च त्वां निकुञ्जे ध्यायन्ती चिन्तयन्ती अतएव हर्षेण आनन्देन उत्फुल्लानि पुलकानि यस्याः तथोक्ता रोमाञ्चितकलेवरेत्यर्थः तथा आनन्दाश्रुभिः प्लुते आच्छन्ने अक्षिणी यस्याः तादृशी अतएव योगः समाधिः तत्र यः एकोऽद्वितीयः रसः रागः तं वेत्तीति तथाभूता वसति तिष्ठति।

२ । स ज जा भ रौ स ल गा यदा कथिता तदा खलु गीतिका ॥ (३३२)

करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ।
बहुलानुरागनिवासरासससुद्भवा भवरागिणं
विदधौ हरिं खलु वल्लवीजनचारु चामरगीतिका ॥ (३३३)

इति महाकाव्ये ॥

२ । वृत्तमीदृशन्तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च ॥ (३३४)

चित्रवृत्तिलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयो विलाससम्पदा कलाकुतूहलेन ।
यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदास्तु ॥(३३५)

---

(३३२) सजसा इति। यदा सजसाः सगणजगणसगणाः ततो भरौ भगणरगणौ ततश्च सलगाः सगणो लघुर्गुरुश्च प्रतिपादमिति शेषः तदा गीतिका नाम वृत्तं कथिता खलु ।

(३३३) उदाहरति करतालेति। करतालैः चञ्चलानां कङ्कणानां करभूषणविशेषाणां स्वनेन झङ्कारेण यत् मिश्रणं सम्मेलनं तेन मनोरमा मनोहारिणी रमणीयो यो वेणुनिनादः वंशीरवः तस्य रङ्गिमा लालित्यं तस्य सङ्गमेन योगेन सुखावहा प्रीतिदायिनीत्यर्थः। बहुलस्य समधिकस्य अनुरागस्य प्रेम्णः निवासेन आश्रयेण यः रासः तेन समुद्भवा समुत्पन्ना वल्लवीजनानां व्रजाङ्गनानां चारुचामरगीतिका मधुरविचित्रगीतिका समवेतसङ्गीतमित्यर्थः चामरन्तु प्रकीर्णकमित्यमरः। हरिं कृष्णं भवरागिणं संसारानुरागवन्तं विदधौ खलु चकारेव परमसुखस्थानं संसार इति निर्द्धारयामासेति फलितार्थः ।

(३३४) वृत्तमिति। यस्य पादे रजौ रजौ रजौ रगणात् परं जगणः, इत्थं वारत्रयं ततो गुरुः लघुश्च भवति, ईदृशं वृत्तं नामतः नाम्ना वृत्तं स्यात् ।

(३३५) उदाहरति चित्रेति। यः चित्रम् अद्भुतं वृत्तं चरितं यस्यां तादृशी

४। रसाश्वाश्वैः शोभानयुगगजठरा मेघविस्फूर्जिता चेत्॥

(३३६)

सदा मूलोन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्द्ध्वं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा।
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा
महाशोभा मौलौ मिलदलिपटलैः कृष्ण! सा कापि वल्ली॥

(३३७)

---

या लीला विलासः तया राजमानस्य शोभमानस्य सद्वयसः यौवनस्य विलास एव सम्पद् तया, निसर्गरम्यं स्वभावमनोहरं यत् देहस्य शरीरस्य रूपं सौन्दर्य्यं तस्य विभ्रमेण विलासेन, तथा कलासु चतुःषष्टिविद्यासु नृत्यगीतादिविद्यासु कुतूहलेन सुराङ्गनानिभैः देवाङ्गनासदृशैः व्रजाङ्गनाजनैः समं सह सुखं समेत्य सङ्गत्य उल्लास विजहार, स विष्णुः कृष्णः सदा सततं मे मम चित्तस्य मनस एव पद्मकोषस्य षट्पदः भ्रमरः अस्तु भवतु सदा मच्चित्ते तिष्ठत्विति भावः।

(३३६) रसेति। चेत् यदि मेघविस्फूर्जिता रसर्त्वश्वैः यमौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यादित्युक्तलक्षणा न युगगजठरा नगणद्वयं गुरुश्च जठरे मध्ये यस्यास्तादृशी भवति तदा तत् वृत्तं रसाश्वाश्वैः षड्भिः सप्तभिः सप्तभिश्च विच्छिन्नमित्यर्थः शोभा नाम स्यात्। तथा च मेघविस्फूर्जितायाः सगणस्थाने नगणः ततश्च गुरुश्चेत् शोभा भवतीति भावः।

(३३७) उदाहरति सदेति। सदा सततं मूले उन्मीलत् सरसिजयुगलं पद्मद्वयं चरणयुगलमिति भावः यस्यास्तथोक्ता, फलाभ्यां स्तनाभ्यामिति भावः मध्ये नम्रा विनता, तयोः फलयोः ऊर्द्ध्वम् उपरि राजन्तौ तरलकिसलयौ चञ्चलनवपल्लवौ कराविति भावः यस्याः तथाभूता आश्लिष्टे युक्ते सुस्निग्धे सुकोमले शाखे भुजाविति भावः यस्याः तादृशी। लसन्ति मुक्ता रक्तोत्पलकुवलयानि दन्तौष्ठनेत्राणीति भावः विद्यन्ते अस्मिन्निति तथोक्तं यत् चन्द्रबिम्बं मुखमिति भावः तेन अञ्चितं शोभितम् अग्रं यस्याः तथाविधा तथा मौलौ शिरसि मिलद्भिः सङ्गच्छद्भिः अलिपटलैः भ्रमरपुञ्जैः केशनिवहैरिति भावः महती शोभा यस्याः तादृशी कापि अनिर्वचनीया वल्ली लता सा राधेति भावः द्रष्टव्या त्वयेति शेषः। अत्रातिशयोक्तिरलङ्कारः।

५ । ख्याता पूर्वैः (सुवंशा) यदिमरभना सद्वयं गो गुरुश्च ॥
(३३८) इति छ० प०

६ । सभरा न्मौ यलगा स्त्रयोदशयति (मत्तेभविक्रीड़ितम्) ॥
(३३९) इति छ० प०

---

प्रकृतिः । [२०९७१५२]

( एकविंशत्यक्षरा वृत्तिः । )

१ । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ॥
(३४०)

व्याकोषेन्दीवराभा कनककषलसत्पीतवासाः सुहासा
बर्हैरुच्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा ।
अंसन्यासत्तवंशोध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्त्तिर्गोपस्य विष्णोरवतु जगति नः स्रग्धरा हारिहारा ॥
(३४१)

---

(३३८) ख्यातेति । यदि मरभना मगणरगणभगणनगणाः ततः सद्वयं सगण-युगलं ततश्च गुरुद्वयं प्रतिपाद्यमिति शेषः तदा तद्वृत्तं पूर्वैः पण्डितैरिति शेषः सुवंशा ख्याता कथिता ।

(३३९) सभरा इति । यस्य पादे सभराः सगणभगणरगणाः ततो न्मौ नगण-मगणौ ततश्च यगणः लघुर्गुरुश्च, तत् वृत्तं त्रयोदशसु यतिर्विरामो यत्र तथाभूतं मत्तेभ विक्रीड़ितं नाम स्यात् ।

(३४०) म्रभ्नैरिति । मगणरगणभगणनगणेभ्यः परं यगणत्रयं यस्य पादे भवति, सा इयं त्रिमुनि यति युता त्रिभिः सप्तभिः विच्छिन्नेत्यर्थः स्रग्धरा नाम वृत्तं कीर्त्तिता कथिता ।

(३४१) उदाहरति व्याकोषेति । व्याकोषेन्दीवराभा विकसितनीलोत्पल-कान्तिः कनककषवत् कषितस्वर्णवत् लसत् विराजत् पीतं वासः वसनं यस्याः

२। न ज भ ज जा ज रौ यदि तदा गदिता सरसी कवी-
श्वरैः॥ (३४२)

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु।
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम्॥ (३४३)

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता।
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरगलितश्रियो जलनिधेश्च तदाऽभवदन्तरं महत्॥(३४४)

इति माघे॥

---

सा दृशी कनकरसेति पाठे तप्तकाञ्चनवदित्यर्थः। सुहासा चारुहासिनी उच्चन्द्रैः उदितचन्द्रकैः अतएव कान्तैः मनोज्ञैः बर्हैः मयूरपिच्छैः वलयितः, वद्धः चिकुरः केशः यस्याः तथाभूता चारुसंनीचः कर्णावतंसः कर्णभूषणं यस्याः तथोक्ता अंस स्कन्धदेशे व्यासक्ता या वंशी वेणुः तस्या ध्वनिना निनादेन सुखितं जगत् यया सादृशी वल्लवीभिः गोपाङ्गनाभिः लसन्ती स्रग्धरा मालाधारिणी हारी मनोहारी हारी यस्याः तथाभूता गोपस्य गोपालकस्य विष्णोः कृष्णस्य मूर्त्तिः जगति वः युष्मान् अवतु रक्षतु।

(३४२) नजेति। यदि नजभजजा नगणजगणभगणजगणद्वयं ततः जरौ जगणरगणौ तदा तद्वृत्तं कवीश्वरैः श्रेष्ठैः कविभिः सरसी नाम गदिता कथिता।

(३४३) उदाहरति चिकुरेति। कलासु नृत्यादिकासु चतुःषष्टिविद्यासु कुतूहली कौतुकवान् अच्युतः कृष्णः चिकुरकलापाः केशपाशा एव शैवलानि तैः जनितः प्रमदो हर्षातिशयः याभिः तथोक्तासु लसन्त्यः रसा रागा एव ऊर्मयः जलतरङ्गा यासां तासु कुचयुगान्येव चक्रवाकमिथुनानि चक्रद्वन्द्वानि तैः अनुगतासु युक्तासु व्रजमृगीनयनाः व्रजाङ्गना एव सरस्यः तासु विभ्रमं विहारं व्यरचयत् विशेषेण कृतवानित्यर्थः। साङ्गरूपकमिदं तदुक्तं दर्पणे। अङ्गिनो यदि साङ्गस्य रूपणं यत् तत्तदेव हीति।

आर्तिः। [४१९४२०४]

(द्वाविंशत्यक्षरा वृत्तिः)

१। मौ गौ नौ चत्वारो गौ गौ वसुभुवनयतिरिति भवति हंसी ॥ (३४५)

साईं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती
कामक्रीड़ाकूतस्फीतप्रमदरसरभमलघु रसन्ती।
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
कंसाराते! पश्य स्वेच्छं सरभसगतिरिह विलसति हंसी ॥ (३४६)

---

(३४४) तुरगेति। परितः सर्वतः तुरगशतैः अश्वसमूहैरित्यर्थः आकुलस्य व्याप्तस्य अपरिमिताश्वबलस्येति यावत् प्रतिपथं प्रतिमार्गं प्रमथिताः क्षोभिताः दलिताश्च भूभृतः राजानः पर्वताश्च येन तथाभूतस्य सततं धृता श्रीः शोभा लक्ष्मीश्च येन तादृशस्य पुरः अग्रतः नगराद्वा परिचलतः गच्छतः बलानुजः कृष्णः तस्य बलस्य सैन्यस्य बलं सैन्यं बलो राम इति शाश्वतः। परं केवलम् एकस्यैव तुरङ्गस्य अश्वस्य जन्म उत्पत्तिमात्रं यस्मात् तथोक्तस्य एकोऽपि जात एव न तु साम्प्रतमस्तीति भावः मन्थनसमये उच्चैःश्रवस एव जातत्वादिति भावः। महीभृता मन्दरेण मथितस्य आलोड़ितस्य तथा चिरं विगता श्रीः लक्ष्मीर्यस्मात् मन्थनकाले लक्ष्मीरुत्पद्यैव नारायणमाश्रितेति भावः तादृशस्य जलनिधेः समुद्रस्य तदा हरिप्रस्थानसमये महत् अन्तरं दूरगमनात् व्यवधानम् उक्तरीत्या प्रभेदश्च अभवत्। अत्रोपमेयस्य बलानुजबलस्य उपमानभूताज्जलनिधेराधिक्यवर्णनात् व्यतिरेकालङ्कारः। तदुक्तं दर्पणे। आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति।

(३४५) माविति। यस्य पादे मगणद्वयं ततो गुरुद्वयं तदनु नगणचतुष्टयं ततश्च गुरुद्वयं तत् वृत्तं वसुषु अष्टासु भुवनेषु चतुर्दशसु यतिर्विरामो यस्यां तादृशी हंसी नाम भवति।

(३४६) उदाहरति सार्द्धमिति। हे कंसाराते! कृष्ण! पश्य अवलोकय, हंसी एकान्ते विजने कान्तेन प्रियेण हंसेन सार्द्धं सुरभि सुगन्धं विकचकमलमधु विकसितपद्ममकरन्दं पिबन्ती कामक्रीड़ाया रतिविहारस्य आकूतेन आशयेन स्फीतः

२। सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा॥ (३४७)

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-

र्भृङ्गकुलैरुपगीतवने वनमालिनमालि! कलानिलयम्।

कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसम्

तं भज माधविकामृदुनर्त्तकयामुनवातकृतोपगमा॥(३४८)

३। भ्नौनरना रना वथ गुरु र्दिगर्कविरमं हि (भद्रकमिदम्)॥

(३४९) इति छ० प०

---

प्रवृद्धः प्रमदरसस्य आनन्दातिरेकस्य रभसः वेगः यस्मिन् तद् यथा तथा रभसो वेगहर्षयोरित्यमरः। अलघु तारं रसन्ती कूजन्ती तथा सरभसा सवेगा गतिर्यस्याः तादृशी त्वरमाणेति भावः इह अस्मिन् कालिन्दीये यामुने पवनस्य पतनेन सञ्चारेण परितरलाः परागाः कौसुमरजांसि यत्र तादृशे पद्मारण्ये कमलकानने स्वैरं स्वच्छन्दं यथा तथा विलसति विहरति। कस्याश्चित् गोप्याः स्वैरविहारार्थिन्या उक्तिरियम्।

(३४७) सप्तेति। सप्तभिर्भकारैर्भगणैर्युतः एकगुरुर्यस्यां तथोक्ता इयम् उदारतरा अतिमहती मदिरा नाम वृत्तं गदिता उक्ता।

(३४८) उदाहरति माधवेति। हे आलि सखि! त्वं माधवमासि वैशाखे मासि वैशाखे माधवो राध इत्यमरः। विकस्वराणि यानि केशरपुष्पाणि वकुलकुसुमानि तेषु लसन्तीभिः राजन्तीभिः मदिराभिर्मधुभिः मुदिताः हृष्टाः तत्पानेनेति भावः तैः भृङ्गाणां मधुकराणां कुलैः उपगीतं यत् वनं तस्मिन् माधविकाया माधवीलतायाः मृदुनर्त्तकेन मन्दमन्दं सञ्चालकेनेत्यर्थः यामुनवातेन यमुनासमीरणेन कृतः उपगमः सान्निध्यं यस्याः तथोक्ता तद्वायुसेवितेति यावत् कुञ्जमेव गृहं तस्य उदरे अभ्यन्तरे पल्लवेन कल्पितं रचितं तल्पं शय्या येन तथोक्तम् अनल्पः गाढ़ः मनोजरसः कामरसः यस्य तादृशं कलानिलयं चतुःषष्टिकामविद्यानिपुणमित्यर्थः वनमालिनं तं कृष्णं भज सेवस्व।

(३४९) भ्नाविति। यस्य पादे भगणरगणौ ततो नगणरगणनगणाः ततश्च रगणनगणौ अथ अनन्तरं गुरुः, इदं वृत्तं दिगर्कविरमं दिक्षु दशसु अर्केषु द्वादशसु विरमः यतिर्यत्र तथाभूतं भद्रकं नाम स्यात्।

४। (लालित्यं) भुजगेन्द्रेण भाषित मेतच्चेन्मसरस्तजनगुभिः॥
(३५०) इति छ० प०

५। सजता नसौ ररौ गः फणितुरगहयैः स्यात् (महास्रग्ध-
राख्या) (३५१) इति छ० प०

---

विकृतिः। [८३८८६०८]

(त्रयोविंशत्यक्षरा वृत्तिः)

१। न ज भ ज भा ज भौ लघुगुरू बुधैस्तु गदितेयमद्रित-
नया॥ (३५२)

खरतरशौर्य्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस! शमनस्तवेति तमवोचदद्रितनया॥
(३५३)

---

(३५०) लालित्यमिति। चेत् यदि मगणसगणरगणसगणतगणजगणनगणेभ्यः परं गुरुणा रचितं वृत्तं स्यात् प्रतिपादं तदेतत् लालित्यं नाम भुजगेन्द्रेण पिङ्गलेन भाषितम्।

(३५१) सजता इति। यस्य पादे सजताः सगणजगणतगणाः, नसौ नगणसगणौ ततो रगणद्वयं ततश्च गुरुः, तत् वृत्तं फणितुरगहयैः अष्टभिः सप्तभिश्च विच्छिन्नमित्यर्थः महास्रग्धराख्या महास्रग्धरा नाम स्यात्।

(३५२) नजेति। यस्य पादे नगणजगणभगणजगणभगणाः ततो जगणभगणौ ततश्च लघुस्तदनु गुरुश्च, इयं बुधैः पण्डितैः अद्रितनया नाम वृत्तं गदिता उक्ता।

(३५३) उदाहरति खरतरेति। हे कंस! खरतरं तीक्ष्णतरं यत् शौर्य्यं वीर्य्यं तदेव पावकः अग्निः तस्य शिखासु ज्वालासु पतङ्गनिभः शलभसदृशः मग्नः पतितः दृप्तः दानवः यस्य तथाभूतः जलधिसुतायाः लक्ष्म्याः विलासवसतिः क्रीड़ानिलयः सतां सज्जनानां गतिराश्रयः अशेषैः सर्वैः जगद्भिरिति भावः मान्यः प्रशंसनीयः महिमा माहात्म्यं यस्य तथाभूतः भुवनानां जगतां हिताय यः अवतारः

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम्।
शकुननिनादनादितककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम्॥
(३५४) इति भट्टौ॥

अश्वललितमिदमन्यत्र॥

२। मत्ताक्रीडं वसुरिष्वाशायति मयुगगयुगमनुलघु गुरुभिः॥
(३५५)

मुग्धोन्मीलन्मत्ताक्रीड़ं मधुसमयसुलभमधुरमधुरसाद्
गाने गाने किञ्चित् स्यन्दत्पदमरुणनयनयुगलसरसिजम्।
रासोल्लासक्रीड़त्कम्रव्रजयुवतिवलयरचितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम्॥ (३५६)

---

जन्मग्रहणं तव चतुरः चराचरधरः विश्वम्भर इत्यर्थः इह चितितले अवतीर्णः सन् तव शमनः हन्तेत्यर्थः अस्ति इति अद्रितनया पार्वती तं कंसम् अवोचत्।

(३५४) विलुलितेति। पवनात्मजः हनूमान् विलुलितानां भंशितानां पुष्पाणां रेणुभिः परागैः उत्पतद्भिरिति भावः कपिशं पिङ्गलं प्रशान्तानि पातितानीत्यर्थः कलिकाः कोरकाः पलाशानि पत्राणि कुसुमानि च यत्र तादृशं कुसुमानां निपातने विचित्रा रञ्जिता इति भावः वसुधा भूमिर्यत्र तथोक्तं सशब्दं यथा तथा निपतद्भ्यः द्रुमेभ्यः वृक्षेभ्यः उत्काः उत्कण्ठिताः शकुनाः पक्षिणो यत्र तथाभूतं शकुनानां पक्षिणां निनादेन कूजनेन नादिताः पूरिताः ककुभः दिशः यत्र तथाविधं विलोलाः चञ्चलाः सन्तः विपलायमाना हरिणा यत्र तथोक्तं यथा तथा हरिणविलोचनायाः मृगनयनायाः सीतायाः अधिवसतिं वासभूमिं रिपोः शत्रो रावणस्य वनम् अशोककाननमिति यावत् बभञ्ज भग्नवान्।

(३५५) मत्ताक्रीड़मिति। यस्य पादः मयुगेन मगणद्वयेन गयुगेन गुरुद्वयेन मनुलघुभिः चतुर्दशलघुभिः ततश्च गुरुणा भवति, तत् वृत्तं वसुषु अष्टसु इषुषु पञ्चसु आशासु दशसु यतिर्विरामो यत्र तथाभूतं मत्ताक्रीड़ं नाम स्यात्।

(३५६) उदाहरति मुग्धोन्मीलदिति। वृन्दारण्ये मुग्धं मनोज्ञं यथा तथा

२। इह (सुन्दरिका) पिङ्गलमुनिनोक्ता सद्वयतो भसतात्-
लभगाः॥ (३५७) इति छ० प०

---

संस्कृतिः। [१६७७७२१६]

(चतुर्विंशत्यक्षरा वृत्तिः)

१। भूतमुनीनैर्यतिरिह भतनाः स्भौ भ न याश्च यदि
भवति तन्वी॥ (३५८)

माधव! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा।
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनैः
निश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी॥
(३५९)

---

न्मीलन्ती स्फुरन्ती मत्तस्येव आक्रीड़ः विलासी यस्य तादृशं मधुसमये वसन्तकाले सुलभं सुप्रापं यत् मधुरं मधु तस्य रसात् आस्वादात् गाने गाने प्रतिसङ्गीतमित्यर्थः किञ्चित् ईषत् स्पन्दत् पदं स्खलच्चरणम् अरुणं रक्तं नयनयुगसरसिजं नेत्रपद्मद्वयं यस्य तथाभूतं रसोल्लासेन रतिविहारकौतुकेन क्रीड़न्तीनां कान्तानां कमनीयानां व्रजयुवतीनां वलयेषु मण्डलेषु रचितः कृतः भुजयो रसः आलिङ्गनव्यापार इत्यर्थः येन तथोक्तम् अनघः निष्पापः पापनाशक इत्यर्थः चरणपरिचयः पादपद्मसेवा यस्य तादृशं सान्द्रानन्दं घनानन्दं हरिं कृष्णं स्मरत यूयमिति भक्तान् प्रत्युक्तिः।

(३५७) सुन्दरिकेति। यस्य पादे सद्वयतः सगणयुगलात् परमित्यर्थः भगण-सगणतगणजगणाः ततो लघुः ततश्च भगणो गुरुश्च, तत् वृत्तं पिङ्गलमुनिना सुन्दरिका उक्ता।

(३५८) भूतेति। यदि इह छन्दोग्रन्थे भगणतगणनगणाः ततः सगणभगणौ ततश्च भगणनगणयगणाः भवन्ति प्रतिपादं, तदा तद्वृत्तं भूतैः पञ्चभिः मुनिभिः सप्तभिः इनैः सूर्य्यैर्द्वादशभिः विच्छिन्नं तन्वी नाम स्यात्।

(३५९) उदाहरति माधवेति। हे माधव! कृष्ण! सा तन्वी कृशाङ्गी राधेति शेषः मुग्धैः मनोहरैः मधुकराणां भ्रमराणां विरुतैः गुञ्जितैः तथा कोकिलानां

२। नाम (किरीट) मिदं भगणा यदि पिङ्गलनागमुनीन्द्र-
मतं किल ॥ (३६०) इति छ० प०

३। सगणै रिह वृत्तवरं वसुभिः किल ( दुर्मिल ) मुक्तमिदं
कविभिः ॥ (३६१) इति छ० प०

---

अतिकृतिः। [३३५५४४३२]

( पञ्चविंशत्यक्षरा वृत्तिः। )

१। क्रौञ्चपदा स्यात् भो मसभाश्चेदिषुशरवसुमुनियति-
रिनलघुगैः ॥ (३६२)

क्रौञ्चपदालीचिविततीरा मदकलखगकुलकलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी।

---

कूजितानि रवाः मलयसमीरा मलयपवनाश्च तैः कम्पमुपेता भयात् कम्पितेत्यर्थः मलयजसलिलैः चन्दनरसैः प्लावनतः सर्वाङ्गसेचनादपीत्यर्थः अविगतः तनुतापः शरीरसन्तापः यस्यास्तादृशी, तथा देहजस्य कामस्य संज्वरभरः सन्तापातिशयः तेन परिदूनैः म्लानैरित्यर्थः पद्मपलाशैः कमलदलैः विरचितं कल्पितं शयनं यस्या यया वा तथाभूता मुहुः पुनः पुनः अतिपरुषम् अतिरूक्षम् अत्युष्णमित्यर्थः निःश्वसती तव ध्यानलये ध्यानयोगे निवसति त्वामेव ध्यायन्ती तिष्ठतीति भावः।

(३६०) नामेति। यदि भगणाः अष्टाविति शेषः तदा पिङ्गलनागमुनीन्द्रस्य मतम् इदं वृत्तं किरीटं नाम स्यात्।

(३६१) सगणैरिति। वसुभिः अष्टाभिः सगणैः यस्य पादो भवति इदं वृत्तवरं पद्यश्रेष्ठं कविभिः दुर्मिलमुक्तम्।

(३६२) क्रौञ्चेति। चेत् यदि भगणमगणसगणभगणाः ततो द्वादशलघवः गुरुश्चैकः प्रतिपादमिति शेषः तत् वृत्तम् इषु शरवसुमुनियतिः पञ्चसु पञ्चसु अष्टसु सप्तसु च यतिर्विरामो यत्र तादृशी क्रौञ्चपदा नाम स्यात्।

(३६३) उदाहरति क्रौञ्चपदेति। हे हरे! कृष्ण! क्रौञ्चानां वकपक्षिणां पदालीभिः पदश्रेणीभिः चिवितं तीरं यस्यास्तथोक्ता यस्यास्तीरे वकाश्चरन्तीति भावः। मदकलानां मदोत्कटानां खगकुलानां पक्षिसङ्घानां कोलकलैः कलाहलैः रुचिरा

फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः
पश्य हरे ! ऽसौ कस्य न चेतो हरति तरलगतिरहिमकिर-
णजा ॥ (२६३)

---

उत्कृतिः । [६७१०८८६४]
( षड्विंशत्यक्षरा वृत्तिः । )

१ । वस्वीशाश्वैश्छेदोपेतं म म त न नयुग र स ल गै-
र्भुजङ्गविजृम्भितम् ॥ (२६४)

हेलोदञ्चद्यञ्चत्पादप्रकटविकटनटनभरो रणत्कर-
तालकः
चारुप्रेङ्खच्चूड़ावर्हः स्रुतितरलनवकिसलयस्तरङ्गित-
हारधृत् ।
नम्रनागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तु-
तिरच्युतः,—
पायान्नश्छिन्दन् कालिन्दीह्रदकृतनिजवसति वृहद्-
भुजङ्गविजृम्भितम् ॥ (२६५)

---

मनोहारिणी फुल्लाभिः विकसिताभिः सरोजानां पद्मानां श्रेणिभिर्विलासः विशेष-शोभा यस्यास्तादृशी मधुमुदितानां मधुपानमत्तानां मधुपानां भ्रमराणां रवेण रभसकरी हर्षजननी फेनानां विलासः प्रकाश एव प्रोज्ज्वलहासः उत्कटहासः यस्यास्तथाभूता तथा ललितेन मनोज्ञेन लहरिभरेण तरङ्गातिशयेन पुलकिता लोमाञ्चिता शोभना तनुः अवयवः यस्याः तादृशी तरला चपला गतिर्यस्यास्तथा-भूता असौ अहिमकिरणजा यमुना कस्य चेतः चित्तं न हरति सर्वस्यैव हरती-त्यर्थः ।

(२६४) वस्वीशाश्वैरिति । यस्य पादे मगणमगणतगणनगणनगणयुगलरगण-सगणाः ततो लघुर्गुरुश्चैकः, तत् वृत्तं वस्वीशाश्वैः अष्टाभिः एकादशभिः सप्तभिश्च विच्छिन्नं भुजङ्गविजृम्भितं नाम स्यात् ।

(२६५) उदाहरति हेलेति । हेलया उदञ्चन्तौ उत्पतन्तौ न्यञ्चन्तौ पादौ

अथ दण्डक:।

१। यदिह नयुगलं तत: सप्तरेफास्तदा चण्डवृष्टिप्रपातो
भवेद्दण्डक:॥ (३६६)

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं,—

सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया।

कमलनयन! रक्ष रक्षेति जल्पत् त्रस्यन्मुग्धगोपाङ्गनालिङ्गनानन्दितो,—

गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय व:॥ (३६७)

---

यत्र तादृश: प्रकट: स्पष्ट: विकट: उत्कट: उद्धत: नटनभर: नृत्यातिशय: यस्य तथाभूत: रणन् करताल: यस्य तथोक्त: दत्तकरतलध्वनिरित्यर्थ: चारु मनोज्ञं यथा तथा प्रेङ्खत् चलत् चूड़ावर्हं चूड़ायां निहितमयूरपिच्छं यस्य तथाभूत:, श्रुत्यो: कर्णयो: तरलौ चञ्चलौ नवौ किसलयौ पल्लवौ यस्य तथाभूत: तरङ्गित: अनेकावृत्त इति भाव: यो हार: तं धरतीति तथोक्त: त्रस्यन्तीभि: बिभ्यतीभि: नागस्य कालियस्य स्त्रीभि: भक्त्या मुकुलितं करयोर्भुजयोर्युगलं यस्मिन् तद्व यथा तथा कृता स्तुतिर्यस्य तथाभूत: अच्युत: कृष्ण: कालिन्द्या य: ह्रद: तस्मिन् कृता निजवसतिर्यस्मिन् तत् वृहत: भुजङ्गस्य विजृम्भितं चेष्टितम् उपद्रवं छिन्दन् सन् व: युष्मान् पायात् रक्षतु।

(३६६) यदिहेति। यत् यदि इह छन्दोग्रन्थे नयुगलं नगणद्वयं तत: सप्तरेफा: रगणसप्तकं तदा चण्डवृष्टिप्रतापी नाम दण्डको भवेत्।

(३६७) उदाहरति प्रलयेति। प्रलये कल्पान्ते या घनघटा मेघाड़म्बर: तस्या इव महान् आरम्भ: यस्या: तथाविधा या मेघावली तस्या चण्डवृष्टिप्रतापेन आकुलं गोकुलं समवलोक्य सपदि तत्क्षणात् सव्येन वामेन हस्तेन गोवर्द्धनं नाम शैलं लीलया अवलीलया दधत् धारयन्। हे कमलनयन! नलिननेत्र! रक्ष रक्ष इति जल्पन्तीभि: त्रसन्तीभि: मुग्धाभि: गोपाङ्गनाभि: आलिङ्गनेन आनन्दित:

२। प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णवव्यालजीमूतलीला-
करोद्दामशङ्खादयः॥ (३६८)

जय जय जगदीश! विष्णो! हरे! राम! दामोदर! श्रीनिवासाच्युतानन्द! नारायण!,—

त्रिदशगणगुरो! मुरारे! मुकुन्दासुरारे! हृषीकेश! पीताम्बर! श्रीपते! माधव!,—

गरुड़गमन! कृष्ण! वैकुण्ठ! गोविन्द! विश्वम्भरोपेन्द्र! चक्रायुधाधोक्षज! श्रीनिधे!

बलिदमन! नृसिंह! शौरे! भवाम्भोधिघोरार्णसि त्वं निमज्जन्तमभ्युद्धरोपेत्य माम्॥ (३६९)

एवमर्णवादीनामप्युदाहरणानि बोध्यानि॥

३। प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वया-
दुत्तरैः सप्तभिर्यैः॥ (३७०)

मुरहर! यदुकुलाम्भोधिचन्द्र! प्रभो! देवकीगर्भरत्न! त्रिलोकैकनाथ!,—

---

गलद्भिः स्रवद्भिः अभिनवधातुधाराभिर्गैरिकादिनिस्रवैः विचित्रः अङ्गरागो यस्य तथाभूतः सुराराति: कृष्णः वः युष्माकं प्रसीदाय अस्तु भवतु।

(३६८) प्रतीति। यस्य दण्डकस्य प्रतिचरणम् एको रगणः अधिकः सः अर्णः, अर्णवः व्यालः, जीमूतः, लीलाकरोद्दामः शङ्खः इत्यादिसंज्ञः स्यादित्यर्थः।

(३६९) अर्णोनामकमुदाहरति जयेति। जगदीशेत्यादि शौरे इत्यन्तं सम्बोधनान्तं पदं जयजय सर्वोत्कर्षेण वर्त्तस्वेत्यर्थः। भवः संसार एव अम्भोधिः समुद्रः तस्य घोरे भीषणे अर्णसि जले निमज्जन्तं निपतन्तं माम् उपेत्य अभ्युद्धर परित्राहि।

(३७०) प्रचितकेति। यस्य पादः नद्वयात् नगणयुगलात् उत्तरैः परैः सप्तभिः यैर्यगणैः भवति, स दण्डकः धीरधीभिः बुधैः प्रचितकं समभिधा संज्ञा यस्य तथोक्तः स्मृतः।

३। प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केशरीन्द्र !।

चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार !

प्रणतजनपरितापोग्रदावानलोच्छेदमेघ ! प्रसीद प्रसीद प्रसीद ॥ (३७१)

४। सगणः सकलः खलु यत्र भवेत्तमिह प्रवदन्ति बुधाः कुसुमस्तवकम् ॥ (३७२)

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुंभगः,—

भ्रमरप्रकरेण यथावृतमूर्त्तिरशोकलताविलसत्कुसुमस्तवकः।

---

(३७१) उदाहरति मुरहरेति। हे सुरहर ! सुरशत्रो ! यदुकुलमेव अम्भोधिः समुद्रः तस्य चन्द्रः तत् सम्बुद्धौ, प्रभो ! निग्रहानुग्रहसमर्थ ! सर्वशक्तिमन्नित्यर्थः देवकीगर्भरत्न ! देवकीजठरमणे ! त्रिलोकैकनाथ ! त्रिभुवनैकाश्रय ! प्रचितकपटा मायाविन इत्यर्थः ये सुरारयः असुराः तेषां व्रजः समूह एव उद्दामः उत्कटः मदोद्धत इत्यर्थः दन्तावलस्तोमः गजनिवहः तस्य विद्रावणे ध्वंसने केशरीन्द्रः मृगराजराजः तत् सम्बुद्धौ, चरणनखरा एव सुधांशवः तेषां छटा समूहः तस्य उन्मेषेण प्रकाशेन निःशेषितं नाशितं ध्यायिनां योगिनां चेतोनिविष्टं चित्तस्थितम् अन्धकारं येन तथाभूतः तत्सम्बुद्धौ, तथा प्रणतजनानां परितापः आध्यात्मिकादितापत्रयमित्यर्थः स एव उग्रदावानलः भीषणवनाग्निः तस्य उच्छेदे निर्वापणे मेघः तत्सम्बुद्धौ प्रसीद प्रसीद प्रसीद सततं प्रसन्नो भवेत्यर्थः।

(३७२) यत्र दण्डके सकलः नवसंख्यक इति भावः सगणः भवेत्, इह छन्दोग्रन्थे बुधाः तं कुसुमस्तवकं कुसुमास्तरणमिति वा पाठः प्रवदन्ति।

(३७३) उदाहरति विरराजेति। यदीयकरः यस्य भुज इत्यर्थः कनकद्युतिबन्धुरायाः काञ्चनप्रभोन्नतानतायाः वामदृशः मृगाक्ष्याः राधाया इति भावः कुचकुम्भगः स्तनमुकुलगामी सन् भ्रमरप्रकरेण भृङ्गवृन्देन आवृता मूर्त्तिर्यस्य तथोक्त

स नवीनतमालदलप्रतिमच्छवि बिभ्रदतीव विलोचन-
हारि वपुः।
चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुज-
मध्यगतः॥ (३७३)

५। यत्र रेफः परं स्वेच्छया गुम्फतः स स्मृतो दण्डको
मत्तमातङ्गलीलाकरः॥ (३७४)

हेमगौरं वसानोऽंशुकं शक्रनीलासिते वर्ष्मणि स्पष्टदि-
व्यानुलेपाङ्किते,—
तारहारांशुवक्षो नभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः
समं सीरिणा,—
अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासहासो-
र्म्मिकौतूहलैः।
कंसरङ्गाद्रिगः पातु वश्चक्रपाणिर्गतिक्रीड़या मत्तमा-
तङ्गलीलाकरः॥ (३७५)

---

अशीकलतायां विलसन् कुसुमस्तवकः यथा पुष्पगुच्छ इव विरराज शुशुभे, नवीनस्य तमालदलस्य तमालपत्रस्य प्रतिमा सदृशी छविः कान्तिर्यस्य तथाभूतम् अतीव विलोचनहारि नेत्रयोरत्यानन्ददायीत्यर्थः वपुः शरीरं बिभ्रत् दधत् तथा चपला विद्युत् तद्वत् रुचिरा स्फुरन्ती या अंशुकवल्ली वसनलता तस्या धरतीति धरः पचादित्वादच्। स हरिः कृष्णः मदीयं मत्सम्बन्धि यत् हृदम्बुजं हृदयकमलं तत्र गतः स्थितः अस्तु भवतु।

(३७४) यत्रेति। यत्र दण्डके परं केवलं स्वेच्छया रेफः रगणः नवसंख्यक इति भावः गुम्फितः रचितः, स दण्डकः मत्तमातङ्गलीलाकरः नाम स्मृतः कथितः।

(३७५) उदाहरति हेमगौरमिति। शक्रनीलम् इन्द्रनीलं नीलकान्तमणि-रित्यर्थः तद्वत् असितं श्यामं तस्मिन् स्पष्टेन उज्ज्वलेन दिव्येन उत्कृष्टेन अनुलेपेन अङ्गरागेण अङ्किते चित्रिते वर्ष्मणि देहे हेमगौरं पीतमित्यर्थः अंशुकं वसनं वसानः दधानः तारो महान् हारस्य अंशुः प्रभा यत्र तादृशं यत् वक्ष एव नभः आकाशं तत्र चित्रा या माला वनमालेत्यर्थः तया अञ्चितः शोभितः, भव्याभिर्मनो-

। लघुर्गुरुर्निजेच्छया यदा निवेश्यते तदैष दण्डको भव-
त्यनङ्गशेखरः ॥ (३७६)

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके ! विजृ-
म्भमाणगौरदीधितिः,—

रतिस्वहस्तनिर्मितः कलाकुतूहलेन चारुचम्पकैरनङ्ग-
शेखरः किमु ? ।

इति प्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं समुद्गिरन्
सुरारिरङ्गताम्,—

प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु
वः कृतार्थताम् ॥ (३७७)

७। यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते बुधैरशोक-
पुष्पमञ्जरीति ॥ (३७८)

---

ग्राभिर्भूषाभिः उज्ज्वलम् अङ्गं यस्य तथाभूतः अञ्जनाभं कज्जलप्रभं नीलमित्यर्थः अम्बरं वस्त्रं यस्य तादृशेन इन्दुश्च कुन्दं माघ्यकुसुमविशेषश्च तद्वत् आभा यस्य तादृशः देहो यस्य तथाभूतेन श्वेतकान्तिनेत्यर्थः सीरिणा बलभद्रेण समं लीलया परिहासस्य हासस्य च ऊर्मीणां परम्पराणां कोलाहलैः कलरवैः कंसस्य रङ्गः संग्रामसमाज एव अद्रिः पर्वतः तत्र गतः गतिक्रीड़या विचरणव्यापारेण मत्तस्य मातङ्गस्य हस्तिनः लीलाकरः मत्तगज इव विचरणकारीत्यर्थः चक्रपाणिः कृष्णः वः युष्मान् पातु रक्षतु ।

(३७६) लघुरिति । यदा निजेच्छया लघुः ततः गुरुः निवेश्यते, तदा एष दण्डकः अनङ्गशेखरो नाम भवति ।

(३७७) उदाहरति उदेतीति । हे राधिके ! अद्य पुरः अग्रतः विजृम्भमाणा उद्यन्तः गौराः दीधितयः यस्य तथोक्तः असौ सुधाकरः चन्द्रः कलासु शिल्पकर्मसु कुतूहलेन कौतुकेन चारुचम्पकैः मनोहरचम्पककुसुमैः रत्या कामपत्न्या स्वहस्तेन निर्मितः सृष्टः अनङ्गस्य कामस्य शेखरः शिरभूषणं किमु उदेति ? विलोकय पश्य इति इत्थं प्रमोदकारिणीम् आनन्दविधायिनीं प्रियायाः राधायाः प्रसादः प्रसन्नता मानभञ्जनमिति भावः लक्षणम् आश्रय इति यावत् यस्याः तथाभूताम्

मूर्द्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारु-
चन्द्रिका कचेषु,—

कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेशरोप-
क्लृप्तदाम ।

फुल्लनागकेशरादिपुष्परेणुरूपणं तनौ विचित्रमित्युपात्त-
वेश एष,—

केशव: पुनातु व: स्वपुष्पभूषित: स मूर्त्तिमानिवागतो
मधुर्विहर्त्तुमत्र ॥ (३७९)

८। यकारै: कवीच्छानुरोधान्निवद्धै: प्रसिद्धो
विशुद्धोऽपरो दण्डक: (सिंहविक्रीड़नामा) ॥ (३८०) छ० प०

---

अद्भुतां मनोहारिणीं गिरं वाचं समुद्गिरन् कथयन् प्रदोषकाले रजनीमुखे य: सङ्गम: तेन तदर्थम् उल्लसत् उत्सुकमित्यर्थ: मनो यस्य तादृश: मनोजस्य कामस्य केलौ क्रीड़ायां कौतुकी लालस इत्यर्थ: मुरारि: कृष्ण: व: युष्माकं कृतार्थतां साफल्यं करोतु ।

(३७८) यत्रेति। यत्र दण्डके गुरो: पर: क्रमात् लघु: दृश्यते, स बुधै: पण्डितै: अशोकमञ्जरीति उच्यते ।

(३७९) उदाहरति मूर्द्ध्नीति । मूर्द्ध्नि शिरसि चारुचम्पकस्रजा मनोज्ञचम्पकमालया सलीलं सविलासं वेष्टनं कचेषु केशेषु लसन्ति विकसन्ति लवङ्गानि लवङ्गकुसुमानि चारुचन्द्रिका: मनोज्ञमल्लिकाश्च, कर्णयो: वतंसक. भूषणम् अशोकपुष्पमञ्जरी, गले कण्ठे च कान्तं मनोहरं केशरै: वकुलकुसुमै: उपक्लृप्तं गुम्फितं दाम माल्यं, तनौ शरीरे विचित्रं फुल्लानां विकसितानां नागकेशरादिपुष्पाणां रेणुभि: परागै: रूपणं प्रसाधनम् इति इत्थम् उपात्त: गृहीत: वेश: येन तथाभूत: एष केशव: कृष्ण: स्वै: स्वकालोद्भवैरित्यर्थ: पुष्पै: भूषित: अलङ्कृत: अत्र वृन्दावने इति भाव: विहर्त्तुम् आगत: मूर्त्तिमान् मधुर्वसन्त इव व: युष्मान् पुनातु पवित्रीकरोतु आनन्दयतु इत्यर्थ: ।

(३८०) यकारैरिति । कवीनाम् इच्छानुरोधात् निवद्धै: रचितै: यकारै: यगणै: दशभिरिति शेष: अपर: पूर्वोक्तेभ्य: अतिरिक्त: विशुद्ध: निर्दोष: सिंहविक्रीड़नामा दण्डक: प्रसिद्ध: ।

९। स्वेच्छया रजौ क्रमेण संनिवेश्ययत्युदारधीः
कविः स दण्डकः स्मृतो (जयत्यशोकमञ्जरी) ॥ (३८१)छ०प०

१०। यत्र रेफान् कविः स्वेच्छया पाठसौकर्य्यसापेक्षया
रोपयत्येष धीरैः स्मृतो दण्डको (मत्तमातङ्गलीलाकरः) ॥ (३८२)
इति छ० प०

११। न युगलगुरुयुगैवं यकाराः कवीच्छानुरोधात्
तदा यत्र वक्ष्यन्ते एषोऽपरो दण्डकः पण्डितैरीरितः (सिंह-
विक्रान्तनामा) ॥ (३८३) इति छ० प०

इति दण्डकप्रकरणम्।

इति छन्दोमञ्जर्यां समवृत्ताख्यो नाम द्वितीयः स्तवकः।

---

## अथ तृतीयः स्तवकः।

---

१। विषमे यदि सौ स ल गा दले
भौ युजि भाद्गुरुकावुपचित्रम् ॥ (१)

---

(३८१) स्वेच्छयेति। उदारधीः महाबुद्धिः कविः स्वेच्छया निजाभिप्रायेण क्रमेण रजौ रगणजगणौ सन्निवेशयति यदीति शेषः स दण्डकः अशोकमञ्जरीति स्मृतः सन् जयति सर्वोत्कर्षेण वर्त्तते।

(३८२) यत्रेति। यत्र कविः स्वेच्छया पाठसौकर्य्यसापेक्षया पाठसौन्दर्य्यानुरोधेनेत्यर्थः रेफान् रगणान् त्रयोदशेति शेषः रोपयति रचयति, धीरैः बुधैः एष दण्डकः मत्तमातङ्गलीलाकरः नाम स्मृतः।

(३८३) नेति। यत्र यदा कवीच्छानुरोधात्।

---

(१) विषमे इति। यदि विषमे प्रथमे तृतीये चेत्यर्थः पादे सौ सगणौ ततः सलगाः सगणो लघुर्गुरुश्च युजि युग्मे पादे द्वितीये चतुर्थे इत्यर्थः भौ भगणौ, ततः भात् भगणात् गरुकौ गुरुद्वयमित्यर्थः तद्वृत्तम् उपचित्रं नाम।

द्वितीयश्लोकः पूरयितव्यः।

सुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम्।
गगनञ्चपलामिलितं यथा शारदनीरधरैरुपचित्रम्॥ (२)

२। विषमे यदि प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात्॥(३)

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा।
रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम॥ (४)

३। अयुजि प्रथमेन विवर्जितम्॥ (५)

द्रुतविलम्बितकं हरिणप्लुता।

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता।
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः॥ (६)

---

(२) उदाहरति सुरेति। हेमनिभं काञ्चनप्रतिमं पीतमित्यर्थः यत् अंशुकं वसनं तथा चन्दनं ताभ्यां लिप्तम् आच्छादितमित्यर्थः सुरवैरिणः कृष्णस्य वपुः शरीरं चपलामिश्रितं विद्युज्जड़ितं शारदनीरधरैः शरन्मेघैः उपचित्रं रञ्जितमित्यर्थः गगनं यथा आकाशमिव मुदम् आनन्दं तनुतां विस्तारयतु।

(३) विषमे इति। विषमे पादे पूर्वोक्ते प्रथमे तृतीये चेत्यर्थः प्रथमाक्षरेण हीनं दोधकं दोधकमिच्छति भजितयाक्षाविल्युक्तलक्षणं वेगवती नाम वृत्तं स्यात्।

(४) उदाहरति स्मरेति। स्मरस्य कामस्य वेगवती उद्दीप्तकामेत्यर्थः व्रजरामा व्रजाङ्गना केशवस्य कृष्णस्य वंशरवैः वेणुनिनादैः अतिमुग्धा हृतेत्यर्थः रभसात् वेगात् मदनखेति भावः गुरून् पितृश्वशुरादीन् न गणयन्ती सती केलिनिकुञ्जमेव गृहं तस्मै जगाम गमेः कर्मणि चतुर्थी।

(५) अयुजीति। अयुजि विषमे पादे प्रथमेन अक्षरेण विवर्जितं विहीनं द्रुतविलम्बितकं द्रुतविलम्बितमाह नभौभराविल्युक्तलक्षणं हरिणप्लुता नाम वृत्तं स्यात्।

(६) उदाहरति स्फुटेति। स्फुटाः प्रकटाः फेनानां चयाः समूहाः यस्याः तथोक्ता हरिणवत् प्लुतं गतिर्यस्यास्तादृशी बलिभिः पूजाद्रव्यैः कुसुमादिभिरित्यर्थः मनोज्ञं मनोहरं तटं यस्यास्तथाभूता कलहंसकुलानाम् आरवेण निनादेन शालते शोभत इति तथोक्ता तरणेः सूर्य्यस्य सुता यमुनेत्यर्थः विहरतः तटभूमौ क्रीड़तः हरेः कृष्णस्य मनः हरति स्म जहार।

४। अयुजि न न र ला गुरुः समे
तदपरवक्त्रमिदं न जौ ज रौ॥ (७)

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम्।
मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमा॥(८)

वैतालीयं पुष्पिताग्राञ्चेच्छन्त्यपरवक्त्रकम्।

५। अयुजि नयुगरेफतो यकारो
युजि तु न जौ ज र गाश्च पुष्पिताग्रा॥ (९)

करकिसलयशोभया विभान्ती
कुचफलभारविनम्रदेहयष्टिः।
स्मितरुचिरविलासपुष्पिताग्रा
व्रजयुवतिव्रततिर्हरेर्मुदेऽभूत्॥ (१०)

---

(७) अयुजीति। अयुजि विषमे पादे ननरला नगणौ ततो रगणः तदनु लघुः गुरुश्च, समे पादे द्वितीये तुर्य्ये चेत्यर्थः नजौ नगणजगणौ ततो जरौ जगणरगणौ तत् इदं वृत्तम् अपरवक्त्रं नाम स्यात्।

(८) उदाहरति स्फुटेति। स्फुटाभिः प्रकटाभिः सुमधुराभिः वेणुगीतिभिः वंशीसङ्गीतैः तं माधवं कृष्णम् अपरवक्त्रम् असाधारणसुखम् अवेत्य ज्ञात्वा व्रजवनिता गोप्यः मृगयुवतिगणैः मृगीवृन्दैरित्यर्थः समं तेषां गानप्रियत्वादिति भावः धृतः चित्तस्य मनसः विभ्रमः विमोहनमित्यर्थः याभिः तथाभूताः सत्यः स्थिताः। वैतालीयमिति वक्ष्यमाणं वैतालीयं पुष्पिताग्राञ्च वृत्तम् अपरवक्त्रकं नाम इच्छन्ति अपरवक्त्रनाम वैतालीयम् अपरवक्त्रनामिकां पुष्पिताग्राञ्च कवय इच्छन्तीत्यर्थः।

(९) अयुजीति। अयुजि विषमे पादे नयुगरेफतः नगणद्वयात् रगणः तस्मात् यकारः यगणः, युजि च युग्मे पादे नजौ नगणजगणौ ततः जरगाः जगणरगणौ ततश्च गुरुः, तत् पुष्पिताग्रा नाम वृत्तं स्यात्।

(१०) उदाहरति करेति। करा एव किसलया नवपल्लवाः तेषां शोभया श्रिया विभान्ती राजमाना कुचाः स्तना एव फलानि तेषां भारेण विनम्रा विनता देहयष्टिः यस्याः तथाभूता स्मितानां रुचिरा मनोज्ञा विलासा एव पुष्पाणि यत्र

६। अयुजोर्यदि सौ ज गौ युजोः
　　स भ रा लौ यदि सुन्दरी तदा॥ (११)
यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा।
अपि कंसहरस्य दुर्वचं तद्विदधीत विस्मयम्॥ (१२)
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा।
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्॥ (१३)
इति भारवी।
७। भत्रय मोजगतं गुरुणी चेद् युजि च नजौ ज्यगुतौ
　　(द्रुतमध्या)॥ (१४) इति छ० प०
८। ओजे तपरौ जरौ गुरुश्चेन् म्सौ ज्गौ ग् (भद्रविराड्)
　　भवेदनोजे॥ (१५) इति छ०प०

---

लाट्यम् अग्रं सुखम् उपरिभागश्च यस्याः तथाभूता व्रजयुवतिव्रततिः व्रजाङ्गनागणः हरे कृष्णस्य मुदे आनन्दाय अभूत्।

(११) अयुजोरिति। यदि अयुजोः विषमयोः पादयोः प्रथमतृतीययोरित्यर्थः सौ सगणौ ततो जगौ जगणो गुरुश्चेत्यर्थः, यदि च युजोः द्वितीयचतुर्थयोः पादयोः सभराः सगणभगणरगणाः ततो लघुर्गुरुश्च तदा सुन्दरी नाम वृत्तं स्यात्।

(१२) उदाहरति यदिति। सुन्दरी राधा परितः सर्वतः स्नेहमयेन सस्नेहेन चक्षुषा उदीक्ष्य विचार्येत्यर्थः यत् अवोचत् उक्तवती, दुर्वचम् अन्यैर्वक्तुमशक्य-मित्यर्थः तत् वचनं कंसहरस्य कृष्णस्य विस्मयं विदधीत कुर्वीत।

(१३) यदिति। मानिनी अभिमानवती द्रौपदी परितः सर्वतः स्नेहप्रचुरेण चक्षुषा ज्ञानदृष्ट्येत्यर्थः वीक्ष्य विविच्य यत् अवोचत उक्तवती, दुर्वचं वक्तुमशक्यम् अन्यैरिति शेषः तत् वचनं वागधिपस्य बृहस्पतेरपि विस्मयं विदधीत जनयेत्।

(१४) भत्रयमिति। ओजे विषमे पादे गतं भत्रयं भगणत्रयं ततो गुरुणी गुरुद्वयमित्यर्थः, युजि च समे पादे नजौ नगणजगणौ ज्यगुतौ ततो जगणयगणौ यत् वृत्तं द्रुतमध्या नाम स्यात्।

(१५) ओजे इति। ओजे विषमे पादे तपरौ तगणात् परौ जरौ जगण-

[ ९। असमे सजौ सगुरुयुक्तौ (केतुमती) समेभरनगाद्गः ॥ (१६) इति छ॰प॰

१०। (आख्यानकी) तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् ॥ (१७) इति छ॰प॰

११। जतौ जगौ गो विषमे समे चेत्, तौज्गौग एषा विपरीतपूर्वा ॥ (१८) इति छ॰प॰

१२। स्यादयुग्मके रजौ रयौ समे चेद् जरौजरौ गुरुर्जवात्-परामतीयम् ॥ (१९) इति छ॰ प॰

१३। अयुजि ननभभाः समकेपितु नयुगरयुगलं तदा (कौसुदी) ॥ (२०) इति छ॰ प॰

---

रगणौ ततो गुरुश्चेत्, तथा अनोजे समे पादे म्सौ मगणसगणौ ज्गौ जगणौ गुरुश्च ततो गुरुश्चेत् तद्वृत्तं भद्रविराट् नाम स्यात्।

(१६) असमे इति। असमे विषमे सजौ सगणजगणौ सगुरुयुक्तौ सगणो गुरुश्चेत्यर्थः, समे पादे भरनगात् भगणरगणनगणात् परं गुरुद्वयं तदा केतुमती नाम वृत्तं स्यात्।

(१७) आख्यानकीति। ओजे विषमे तौ तगणौ जगुरुगः जगणो गुरुद्वय-ञ्चेत्यर्थः, अनोजे समे जतौ जगणतगणौ जगरु जगणो गुरुः पुनश्च गुरुश्चेत् तदा आख्यानकी नाम वृत्तं स्यात्।

(१८) जताविति। विषमे जतौ जगौ गः जगणतगणाभ्यां जगणो गुरुद्वय-ञ्चेत्यर्थः, समे पादे चेत् यदि तौ जगौ गः तगणजगणाभ्यां परौ गुरू, भवतः तदा एषा विपरीतपूर्वी नाम वृत्तं स्यात्।

(१९) स्यादिति। अयुग्मके विषमे रजौ रयौ रगणजगणरगणयगणा इत्यर्थः, समे पादे चेत् यदि जरौ जरौ जगणरगणौ पुनश्च जगणरगणौ ततश्च गुरुर्भवति तदा इयं जवात् परामती नाम वृत्तं स्यात्।

(२०) अयुजीति। अयुजि विषमे पादे ननभभाः नगणौ ततो भगणौ, समके समे पादे अपि तु किन्तु नयुगरयुगलं नगणौ रगणौ चेत्यर्थः तदा कौमुदी नाम वृत्तं स्यात्।

१४। यदि विषमे भवतो नजौजरौ सजयाः समेतु जगुरु
(मञ्जुसौरभम्) ॥ (२१) इति छ॰प॰

१५। विषमे ससजा यदा गुरु चेत् सभरा येनतु (मालभा-
रिणीयम्) ॥ (२२) इति छ॰प

इति छन्दमञ्जर्य्यामर्द्धसमाख्यस्तृतीयः स्तवकः।

---

## चतुर्थः स्तवकः।

### अथ विषमवृत्तम्।

१। प्रथमे स जौ यदि सलौ च
न स ज गुरुकाण्यनन्तरम्।
यद्यथ भ न भ गाः स्युरथो
स ज सा ज गौ च भवतीयमुद्गता ॥ (१)

---

(२१) यदीति। यदि विषमे पादे नजौ जरौ नगणजगणौ ततश्च जगण-रगणौ, समेतु किन्तु समे पादे स जयाः सगणजगणयगणाः रलघु रगणौ लघु-श्चैत्यर्थः तत् वृत्तं मञ्जुसौरभं नाम स्यात्।

(२२) विषमे इति। विषमे पादे यदा ससजा गुरू, सगणौ जगणौ गुरुद्वय-श्च त्यर्थः, चेत् समे पादे सभरा येन तु, किन्तु सगणभगणरगणास्ततो यगणः इयं मालभारिणी नाम वृत्तं स्यात्।

---

(१) प्रथमे इति यदि प्रथमे पादे सजौ सलौ च सगणजगणसगणा लघुश्चेत्यर्थः, अनन्तरं द्वितीये पादे इत्यर्थः अनन्तरं द्वितीये पादे इत्यर्थः नसजगुरु-काणि नगणसगणजगणा गुरुश्चेत्यर्थः, यदि अथ अनन्तरं तृतीये पादे इत्यर्थः भनभगाः भगणनगणभगणा गुरुश्चेत्यर्थः स्युर्भवन्ति, अथो अनन्तरं चतुर्थे पादे

विललास गोपरमणीषु तरणितनया प्रभोद्गता।
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम्॥ (२)

२। प्रथमे स जौ यदि स लौ च
न स ज गुरुकाण्यनन्तरम्।
यद्यथ भ न ज ल गाः स्युरथो
स ज सा ज गौ च भवतीयमुद्गता॥ (३)

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम्।
क्लान्तिरहितमभिराधयितुं
विधिवत्तपांसि विदधे धनञ्जयः॥ (४)

इति भारवावुद्गताभेदः।

---

सजसा जगौ च सगणजगणसगणा जगणौ गुरुश्च भवति, इयम् उद्गता नाम वृत्तं स्यात्।

(२) उदाहरति विललासेति। प्रभया कान्त्या उद्गता समुदिता समुज्ज्वलेत्यर्थः तरणितनया यमुना गोपरमणीषु व्रजाङ्गनासु सतीषु अपिरत्राध्याहार्यः अनादरे सप्तमी। ताः अपि अनादृत्येत्यर्थः कृष्णस्य नयने एव चकोरौ पक्षिविशेषौ तयोर्युगे युगले सुधांशोः चन्द्रस्य किरणानाम् ऊर्मिविभ्रमं तरङ्गभ्रान्तिं दधती कुर्वतीत्यर्थः विललास विरराज कृष्णस्य यमुना अतिमनोहारिणी अभूदिति भावः। व्यतिरेकालङ्कारः।

(३) प्रथमे इति। प्रथमे आद्ये पादे यदि सजौ सलौ च सगणजगणसगणा लघुश्चेत्यर्थः अनन्तरं द्वितीये पादे इत्यर्थः नसजगुरुकाणि नगणसगणजगणा गुरुश्चेत्यर्थः, अथ अनन्तरं तृतीये पादे इत्यर्थः यदि भनजलगाः भगणनगणजगणा लघुर्गुरुश्च स्युः अथो चतुर्थे पादे सजसा जगौ च सगणजगणसगणा जगणौ गुरुश्च भववि, इयम् उद्गता नाम स्यात्।

(४) उदाहरति अथेति। अथ इन्द्रान्तर्धानानन्तरं रुचिरं प्रसन्नं वदनं यस्य तथाभूतः धनञ्जयः अर्जुनः वासवस्य इन्द्रस्य वचनेन उपदेशेन त्रिलोचनं हरम् अभिराधयितुं क्लान्तिरहितम् अक्लममित्यर्थः श्रममविगणय्येति भावः विधिवत् यथाविधि तपांसि विदधे कृतवान्।

३। त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा।
जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम्॥ (५)
परिभूतफुल्लशतपत्रवनविस्तृतगन्धविभ्रमा।
कस्य हृन्न हरतीह हरे! मुखपद्मसौरभकला तवाद्भुता॥ (६)
४। नयुगं सकारयुगलञ्च भवति चरणे तृतीयके।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता॥(७)

व्रजसुन्दरीसमुदयेन
मुदितमनसा स्म पीयते।
हिमकरगलितमिवामृतकं
ललितं मुरारिमुखचन्द्रविद्रुतम्॥ (८)
भवत्यर्द्धसमं वक्त्रं विषमञ्च कदाचन।
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते॥ (९)

---

(५) त्रयमिति। इह छन्दोग्रन्थे त्रयं पदं प्रथमद्वितीयचतुर्थपादा इत्यर्थः उद्गतायाः पूर्वोक्तायाः सदृशं तृतीयं तृतीयपाद इत्यर्थः रनभगैः रगणनगणभगणैः गुरुणा च अन्यथा ग्रथितं जायते यदीति शेषः, तदा ईदृशमेतत् वृत्तं सौरभकं कथयति।

(६) उदाहरति परीति। हे हरे! कृष्ण! परिभूतः तिरस्कृतः फुल्लानां विकसितानां शतपत्रवनानां पद्मसमूहानां विस्तृतः विस्तारं गतः गन्धविभ्रमः सौरभविलासः यया तादृशी तव अद्भुता मुखपद्मस्य सौरभकला सौगन्ध्यलेशः इह जगति कस्य जनस्य हृत् हृदयं न हरति? सर्वस्यैव हरतीत्यर्थः।

(७) नेति। यदि तृतीये चरणे नयुगं सकारयुगलञ्च भवति, अस्य पद्यस्य शेषं सकलं प्रथमद्वितीयचतुर्थचरणा इति भावः उद्गता, यथा उद्गतासदृशमित्यर्थः भवति तत् उरुमतिभिः महामतिभिः विद्वद्भिः ललितम् उदितम् उक्तम्।

(८) उदाहरति व्रजेति। व्रजसुन्दरीसमुदयेन गोपीगणेन मुदितमनसा प्रीतमनसा सता हिमकरात् चन्द्रात् गलितमिव निःसृतमिव ललितं मनोहरं मुरारेः कृष्णस्य मुखचन्द्रात् विद्रुतं विगलितम् अमृतमिव अमृतकं रस इत्यर्थः पीयते स्म पीतम्।

५। वक्त्रं युग्भ्यां म गौ स्यातामब्धेर्योऽनुष्टुभिख्यातम्॥ (१०)

वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम्।
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः॥ (११)

६। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्॥ (१२)

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे।
आसीद्गोपमृगाक्षीणां पथ्यावक्त्रमधुस्रुतिः॥ (१३)

७। पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरु षष्ठञ्च पादानां शेषेष्वनियमो मतः॥ (१४)

---

(९) भवतीति। वक्त्रं नाम अष्टाक्षरं वृत्तं कदाचन अर्द्धसमं विषमञ्च द्विविधं भवति तयोः द्वयोरर्द्धसमविषमयोः वक्त्रयोः उपान्ते सप्तमवर्णपर्य्यन्ते इत्यर्थः यत् छन्दः अक्षरनियमः, अत्र छन्दोग्रन्थे अधुना तत् उच्यते कथ्यते।

(१०) वक्त्रमिति। अनुष्टुभि अष्टाक्षरवृत्ते युग्भ्यां समपादाभ्यां द्वितीयचतुर्थाभ्यामित्यर्थः तौ प्राप्येत्यर्थः यवर्थे पञ्चमी। मगौ मगणौ गुरुश्चेत्यर्थः स्यातां ततः अब्धेश्चतुर्थात् परं यगणः, तदा वक्त्रं नाम वृत्तं ख्यातम्।

(११) उदाहरति वक्त्राम्भोजमिति। मुराराते: कृष्णस्य स्मेरं विकस्वरं वक्त्रं वदनमेव अम्भोजं पद्मं तथा फुल्लं विकसितं चक्षुरेव नीलोत्पलं सदा सततं वल्लवीनां गोपीनां चेतोभृङ्गं चित्तमधुकरम् उच्चैः जहार।

(१२) युजोरिति। युजोः समपादयोः द्वितीयचतुर्थयोरित्यर्थः चतुर्थतः चतुर्थवर्णात् परतः जेन जगणेन पथ्यावक्त्रं नाम वृत्तं प्रकीर्त्तितं कथितम्। तथा चास्य द्वितीयचतुर्थयोः पादयोः पञ्चमसप्तमवर्णौ लघू, षष्ठश्च गुरुर्भवत्येव तदन्यत्र नास्ति नियम इति भावः।

(१३) उदाहरति रासेति। मधुवासरे वसन्तदिवसे रासकेलौ रासक्रीड़ायां सतृष्णस्य साभिलाषस्य कृष्णस्य वक्त्रात् मधुस्रुतिः सुधानिस्रवः गोपमृगाक्षीणां गोपीनां पथ्या अनुकूला मनोहारिणीति भावः आसीत्।

(१४) पञ्चममिति। सर्वत्र सर्वस्मिन् वक्त्रे अष्टाक्षरे वृत्ते वा द्विचतुर्थयोः पादयोरिति शेषः पञ्चमं पञ्चमोवर्णं इत्यर्थः लघु, षष्ठञ्च षष्ठो वर्णश्च गुरु पादानां सर्वेषामेवेति शेषः, शेषेषु वर्णेषु अनियमः मतः गुरुलघुनियमो नास्तीत्यर्थः।

प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम्।
लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता कृता॥ (१५)

इति छन्दोमय्यां विषमवृत्ताख्यश्चतुर्थः स्तवकः।

---

## पञ्चमः स्तवकः।

### अथ मात्रावृत्तम्।

१। लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः।
षष्ठो जश्च नलघु वा प्रथमार्द्धे नियतमार्य्यायाः॥
षष्ठे द्वितीयलात् परकेन्ले मुखलाच्च सयतिपदनियमः।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥ (१)

---

(१५) प्रयोग इति। केऽपि पण्डिताः प्रयोगे श्लोकानामिति शेषः एतत् पूर्वोक्तं वक्त्रलक्षणं प्रायिकं बहुलं प्राहुः कथयन्ति, लोके च अनुष्टुभवृत्तमेतत् ख्यातं प्रसिद्धं तस्य अनुष्टुव्वृत्तस्य अष्टाक्षरता मता उक्ता। एतदतिरिक्तन्तु गाथां नाम कथयति वृत्तरत्नाकरः। यथा विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। यच्छन्दो नोक्तमत्र गाथेति तत्पूर्वसूरिभिः प्रोक्तमिति विषमाक्षरपादं यथा। मधुकैटभौ दुरात्मानाविति। देवीमाहात्म्यम्। पादैरसमं चतुष्पादतिरिक्तमित्यर्थः यथा। दशधर्मं न जानन्ति धृतराष्ट्रनिबोध तान्। मत्तः प्रमत्त उन्मत्त श्रान्तः क्रुद्धो बुभुक्षितः। त्वरमाणश्च भीतश्च लुब्धः कामी च ते दश।

---

(१) लक्ष्मैतदिति। आर्य्यायाः प्रथमार्द्धे सप्तगणाः ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कला इत्युक्तलक्षणाः गोपेता मात्राद्वयसहितेति भावः नियतं भवन्ति। इह आर्य्यायां विषमे प्रथमे तृतीये च पादे जः जगणः न भवति, षष्ठो गणः जश्च जगणो वा नलघु वा चतुर्लघुरूपो वा भवतीति शेषः। एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। इति नयेन एकमात्रया एकोलघुः एकेन च गुरुणा मात्राद्वयं बोद्ध-

क्षण: शिशु: सुतो मे वल्लवकुलटाभिराहृतो न गृहे।
चणमपि वसत्यसाविति जगाद गोष्ठां यशोदार्य्या॥ (२)

---

श्रम्। तथाच लघुचतुष्टयम् एकेन गुरुणा सहितं लघुद्वयं गुरुद्वयं वा चतुर्मात्रो गणो बोध्य:। केचित्तु दीर्घान्ता इत्यवश्यभावि, मात्राद्वयेन न भवतीत्याहु:। अत्र यति नियममाह षष्ठे इति षष्ठे गणे नु नगणलघुरूपे सति द्वितीय लात् द्वितीयलघो: परमिति शेष: तथा परके सप्तमे गणे नु नलघुरूपे सति मुखलात् प्रथमलघो: परं स यतिपदनियम: पदविच्छेदव्यवस्था। इह चरमेऽर्द्धे पञ्चमके गणे नु चतु लघुरूपे सतीत्यर्थ: तस्मात् मुखलात् आद्य लघो: परं स यतिपदनियम: षष्ठश्च गण: एकलघुर्भवति। तथाच आर्य्याया: पूर्वार्द्धे त्रिंशन्मात्रा: परार्द्धे सप्तविंशतिमात्रा इति तस्मात् सप्तपञ्चाशन्मात्रा आर्य्येति फलितम्। अन्ये तु अस्या: पादान्ते एव यतिरित्याहु:। अस्याश्च गुरुलघुभेदेन संज्ञाभेद: यथा। यत्र सप्तविंशतिर्गुरवो लघवश्च त्रय:, सा त्रिंशदक्षरा लक्ष्मीर्नामार्य्या सर्ववन्द्या। यत्र षड्विंशतिर्गुरव: पञ्चलघवश्च, सा ऋद्धिर्नाम एकत्रिंशदक्षरार्य्या। यत्र पञ्चविंशतिर्गुरव: सप्तलघवश्च सा बुद्धिर्नामार्य्या। यत्र चतुर्विंशतिर्गुरव: लघवश्च नवसंख्यका: सा लज्जा नाम। यत्र त्रयोविंशतिर्गुरव: लघवश्चैकादश, सा विद्या नाम। यत्र द्वाविंशतिर्गुरव: लघवश्च त्रयोदश सा चमा नाम। इत्थं क्रमेण एकैकगुरुह्रासेन द्विद्विलघुवृद्ध्या देवी २१। गौरी २०। रात्रि: १९। चूर्णा १८। छाया १७। कान्ति: १६। महामाया १५। कीर्त्ति: १४। सिद्धा १३। मनोरमा १२। गाहिनी ११। विश्वा १०। वासिता ९। शोभा ८। हरिणी ७। चक्री ६। सारसी ५। कुररी ४। सिंही ३। हंसी २। तदेवं षड्विंशतिनामान्यार्य्याया:। एकगुरुका आर्य्या न भवेदिति तन्नाम नोक्तम्। अस्या: पाठक्रमो यथा। प्रथमपादो हंसपदवत् मन्थरं पठ्यते, द्वितीय: सिंहपदक्रमवत् उद्धतं पठ्यते, तृतीयो गजेन्द्रपदवत् सलीलं पठ्यते, चतुर्थ: सर्पगतिवत् चपलं पठ्यते। अस्या जातिभेदो यथा। त्रयोदशलघुर्विप्रा। एकविंशतिलघु: चत्रिया। सप्तविंशतिलघुर्वैश्या। तदन्या शूद्रा। अस्या: कौलीन्यादिर्यथा। एकनायका कुलीना। द्विनायका संगृहीता। हीननायका रक्ता। बहुनायका वेश्या। नायको जगण इति बोध्यम्। यस्या: प्रथमतृतीयपञ्चसप्तमस्थानेषु जगणो भवति सार्य्या दोषायेति पिङ्गलाचार्य्य:।

वृन्दावने सलीलं वल्गुद्रुमकाण्डनिहिततनुयष्टिः।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः॥ (३)
पथ्या विपुला चपला मुखचपला जघनचपला च।
गीत्युपगीत्युद्गीतय आर्य्यागीतिश्च नवधार्य्या॥ (४)
२। प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या॥ (५)
जय जय नाथ! मुरारे! केशव! कंसान्तकाच्युतानन्त!
कुरु करुणामिति भणितिः पथ्या भवरोगदुःखानाम्॥ (६)
३। संलङ्घ्यगणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥ (७)

---

(२) उदाहरति कृष्ण इति। कृष्णः मे मम शिशुः सुतः असौ वल्लवकुलटाभिः नष्टाभिर्गोपीभिः आहूतः आकृष्टः सन् गृहे क्षणमपि न वसति इति आर्य्या साध्वी यशोदा गोष्ठ्यां वल्लवसमाजे जगाद। अत्र जगणषष्ठार्य्या।

(३) वृन्दावन इति। वृन्दावने वल्गुद्रुमकाण्डे मनोहरतरुस्कन्धे निहिता अर्पिता तनुयष्टिर्येन तथोक्तः सलीलं सविभ्रमं स्मेरे मुखे अर्पितः निहितः वेणुः वंशी येन तथाविधः कृष्णः मनसि यदि स्यादिति शेषः तदा कः स्वर्गः? नातःपरं स्वर्गसुखमिति भावः। अत्र न लघुयुक्तार्य्या।

(४) आर्य्याया नवविधत्वं दर्शयति पथ्येति पथ्यादयः आर्य्यागीत्यन्ता नव आर्य्याभेदा इत्यर्थः।

(५) पथ्यां लक्षयति प्रथमेति। उभयोर्दलयोरर्द्धयोः प्रथमगणत्रये विरतिर्यस्यां तादृशी आर्य्या पथ्या नाम प्रकीर्त्तिता।

(६) उदाहरति जयेति। हे नाथ मुरारे! केशव! कंसान्तक! अच्युत! अनन्त! करुणां कृपां कुरु, इति भणितिः उक्तिः भवः संसार एव रोगः तेन दुःखानां पीड़ितानां पथ्या अनुकूला हितकारिणीत्यर्थः भवतीति शेषः।

(७) विपुलां लक्षयति संलङ्घ्येति। यस्या आर्य्यायाः द्वयोः शकलयोः खण्डयोरर्द्धयोरित्यर्थः आदिमं गणत्रयं संलङ्घ्य अतिक्रम्य पादो भवति पिङ्गलनागस्तां विपुलाम् इति नाम्ना समाख्याति कीर्त्तयति। अत्र गणत्रयान्ते यत्र क्वचित् पादान्तेति बोध्यम्।

पुंसां कलिकालव्यालहतानां नास्त्युपहतिरल्पापि।
वीर्यविपुला मुखे चेत् स्याद् गोविन्दाख्यमन्त्रकला॥ (८)
४। दलयोर्द्वितीयतुर्यौ गणौ जकारौ तु यत्र चपला सा॥ (९)
द्विरावृत्त्या श्लोकः पूरयितव्यः।
चपला न चेत् कदाचित् नृणां भवेद्भक्तिभावना कृष्णे।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः॥ (१०)
५। आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः।
शेषः पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना॥ (११)
नन्दसुत! वञ्चकस्त्वं दृढं न ते प्रेम गच्छ तत्रैव।
यत्र भवति ते रागः कापि जगादेति मुखचपला॥ (१२)
६। प्राक्प्रतिपादितमर्द्धं प्रथमे प्रथमेतरे च चपलायाः।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला॥ (१३)

---

(८) उदाहरति पुंसामिति। कलिकाल एव व्यालः सर्पः तेन हतानां दष्टानां पुंसां चेत्, यदि मुखे वीर्य्येण प्रभावेण विपुला अतिमहती गोविन्द आख्या यस्य तस्य कृष्णस्येत्यर्थः मन्त्रकला मन्त्रविन्दुः स्यात्, तदा अल्पापि किञ्चिदपीत्यर्थः उपहतिः क्षतिः नास्ति।

(९) चपलां लक्षयति दलयोरिति। यत्रार्य्यायां दलयोः पूर्वापरार्द्धयोः द्वितीयतुर्य्यौ गणौ जकारौ, सा चपला नामार्य्या।

(१०) उदाहरति चपलेति। चेत् यदि नृणां कृष्णे भक्तिभावना कदाचित् चपला न भवेत् तदा धर्मार्थकाममोक्षाश्चतुर्वर्गाः करस्थाः करतलवर्त्तिनः न सन्देहः, संशयो नास्तीत्यर्थः।

(११) मुखचपलां लक्षयति आद्यमिति। यस्या आर्य्यायाः समस्तम् आद्यं दलं पूर्वार्द्धमित्यर्थः चपलागतं लक्ष्म लक्षणं भजेत आश्रयेत्, शेषः परार्द्धमित्यर्थः पूर्वजलक्ष्मा आर्य्या पूर्वार्द्धलक्षणाक्रान्ता, सा मुनिना पिङ्गलेन मुखचपला उदिता उक्ता।

(१२) उदाहरति नन्दसुतेति। हे नन्दसुत कृष्ण! त्वं वञ्चकः धूर्त्तः, ते तव प्रेम दृढ़ं स्थिरं न, यत्र यस्यां ते तव रागः अनुरागः प्रेमेत्यर्थः भवति तत्रैव गच्छ, मुखचपला अतिमुखरा कापि सुन्दरी इति जगाद उवाच।

...णः शृङ्गारपटुर्यौवनमदरागचपलललिताङ्गः।
...सीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम्॥ (१४)
...। आर्य्याप्रथमार्द्धसमं यस्याः अपरार्द्धमाह तां गीतिम्॥(१५)
...शववंशीगीतिर्लोकमनोहरिणहारिणी जयति।
...पीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्य्या॥ (१६)
...। आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम्॥ (१७)
...वगोपसुन्दरीणां रासोल्लासे मुरारातिम्।
...स्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतिः॥ (१८)

---

(१३) जघनचपलां लक्षयति प्रागिति। या प्रथमेऽर्द्धे प्राक् प्रतिपादितं कथितं ...आर्य्यापूर्वार्द्धलक्षणमित्यर्थः प्रथमात् इतरे अन्यस्मिन् अर्द्धे परार्द्धे इत्यर्थः चप-...या तस्य आश्रयेत, विशुद्धधीभिः शुद्धमतिभिः पण्डितैः सा जघनचपला उक्ता।

(१४) उदाहरति कृष्ण इति। शृङ्गारे निधुवनव्यापारे पटुः निपुणः तथा ...वनस्य मदः तेन यो रागः विषयवासना तेन चपलं लोलं ललितं मनोहरम् ...ङ्गं यस्य तथाविधः कृष्णः जघनचपलानां नृत्यकारिणीनामिति भावः व्रजाङ्ग-...नानां मनोहरः आसीत्।

(१५) गीतिं लक्षयति आर्य्येति। यस्या अपरार्द्धम् आर्य्यायाः प्रथमार्द्धेन ...समं तां गीतिम् आह ब्रवीति पिङ्गलनाग इति शेषः।

(१६) उदाहरति केशवेति। लोकानां जगतां लोकस्तु भुवने जने इत्यमरः। ...मनांस्येव हरिणास्तान् हरतीति तथाभूता गोपीनां मानः प्रणयकोपः स एव ग्रन्थिः ...प्रेमप्रतिबन्धः इत्यर्थः तस्य विमोचनी विध्वंसनी मानहारिणीत्यर्थः दिव्यं गायतीति ...तथोक्ता अतएव आश्चर्य्या अपूर्वा केशवस्य कृष्णस्य वंशीगीतिः वेणुसङ्गीतं जयति ...सर्वोत्कर्षेण वर्त्तते।

(१७) उपगीतिं लक्षयति आर्य्येति। आर्य्यायाः परार्द्धेन तुल्ये दलद्वये ...उभयार्द्धे सति उपगीतिं प्राहुः बुधा इति शेषः।

(१८) उदाहरति नवेति। नवानां नवीनानां तरुणीनामित्यर्थः गोपसुन्द-...रीणां रासोल्लासे रासमहोत्सवे उपगीतिः स्वसन्निधौ गीतं मुरारातिं कृष्णं स्वर्ग-...कुरङ्गीदृशां सुरसुन्दरीणां गीतिः कर्मणि षष्ठी गीतिमित्यर्थः अस्मारयत्।

९। आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः॥ (१९)
नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या।
अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः॥ (२०)
१०। आर्य्याप्राग्दलमन्तेऽधिकगुरु तादृग् परार्द्धमार्य्यागीतिः॥ (२१)

इरावृत्त्या श्लोकः पूरणीयः।
हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः।
आर्य्या गीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम्॥ (२२)
चारुसमीरणरमणे हरिणकलङ्ककिरणावली सविलासा।
आबद्धराममोहा वेलामूले विभावरी परिहीनेति भट्टौ॥(२३)
इत्यार्य्या।

---

(१९) उद्गीतिं लक्षयति आर्य्येति। आर्य्यायाः शकलद्वये खण्डद्वये विपरीते पूर्व्वार्द्धे परार्द्धेण तुल्ये परार्द्धे च पूर्व्वार्द्धतुल्ये इत्यर्थः इह ग्रन्थे उद्गीतिः कथ्यते इति शेषः।

(२०) उदाहरति नारायणस्येति। सन्ततम् अनवरतं नारायणस्य कृष्णस्य भक्त्या उद्गीतिः उच्चैः कीर्त्तनं संस्मृतिः सम्यक् स्मरणं तथा अर्चायाम् आराधने आसक्तिः अनुरागः दुस्तरे तरीतुमशक्ये संसारसागरे भवाब्धौ तरणिः नौका।

(२१) आर्य्यागीतिं लक्षयति आर्य्येति। आर्य्यायाः प्राग्दलं पूर्व्वार्द्धम् अन्ते अधिकगुरु, परार्द्धञ्च तादृक् अधिकगुरु चेदिति शेषः तदा आर्य्यागीतिर्नाम।

(२२) उदाहरति हर्षेति। हर्षाश्रुभिः आनन्दवारिभिः स्तिमिताः सिक्ताः दृशो येषां तथोक्ताः प्रमोदेन आनन्देन यः रोमाञ्चः स एव कञ्चुकः गात्रावरण-विशेषः तेन अञ्चितः अलङ्कृतः इत्यर्थः देहो येषां तथाभूताः सन्तः भक्त्या श्रीपतेः कृष्णस्य चरितसम्बद्धाम् आर्य्यागीतिं साधुसङ्गीतं गायन्ति बुधा इति शेषः।

(२३) चार्व्विति। चारुणा मनोज्ञेन समीरणेन वायुना मलयजेनेति भावः रमणे मनोहरे वेलामूले समुद्रतीरे हरिणकलङ्कस्य चन्द्रस्य किरणावलीभिः सवि-

अथ वैतालीयम्।

१। षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥ (२४)

घुसृणेन मदेन चर्चितं तव यन्निन्दति राधिके! कुचम्।
मुदमातनुतेऽत्र पाकिमं वैतालीयमिदं फलं हरेः॥ (२५)

२। तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम्॥ (२६)

द्विरावृत्त्या श्लोकः पूरयितव्यः।
आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं हृदो विनोदम्।

---

लासा शोभितेत्यर्थः अतएव आवद्धः जनितः रामस्य मोही मूर्च्छा यस्यां तादृशी विरहिणामुद्दीपकत्वादिति भावः विभावरी रजनी परिहीना गता प्रभातेत्यर्थः।

(२४) षड़िति। विषमे प्रथमे तृतीये च पादे षट्कला मात्राः, समे पादे द्वितीये चतुर्थे चेत्यर्थः अष्टौ कलाः स्युः। अथ वैतालीये समे पादे ताश्च कलाः अष्टाविति शेषः निरन्तराः केवललघुरूपाः केवलगुरुरूपा वा नो भवन्ति, अपि तु लघुगुरुमिश्रा एवेत्यर्थः। अत्र आसु कलासु मध्ये समा द्वितीयाप्रभृतिः कला पराश्रिता न स्यात् द्वितीयतृतीयकलयोः चतुर्थीपञ्चमकलयोस्तथा षष्ठीसप्तमकलयो-रेकगुरुर्न कार्य्य इति भावः। अन्ते षट्कलान्ते अष्टकलान्ते च रलौ गुरुः रगणो लघुर्गुरुश्च दातव्यः इति शेषः तथा च विषमे पादे चतुर्दशमात्राः, समे च षोडश-मात्राः स्युः तत् वैतालीयं नाम भवतीति फलितम्।

(२५) उदाहरति घुसृणेनेति। हे राधिके! यत् तालीयं फलं घुसृणेन कुङ्कु-मेन कुङ्कुमं घुसृणं रक्तमिति शब्दरत्नावली। मदेन मृगमदेन मदो रेतसि कस्तूर्यां-मिति मेदिनी। चर्चितम् अनुलिप्तं तव कुचं निन्दति अनुकरोतीति भावः तदिदं पाकिमं पाकेन निष्पन्नं पक्वमित्यर्थः इदं तालीयं फलं तालफलं हरेः कृष्णस्य मुदं प्रमोदम् आतनुते करोति वैशब्दोऽत्र पादपूरणार्थः। वै स्यात् सम्बोधने पाद-पूरणेऽनुनयेऽपि चेति मेदिनी। तद्वैतालीयमित्यपि पाठः।

(२६) औपच्छन्दसकं लक्षयति तत्रैवेति। तत्रैव वैतालीये अन्ते अधिके गुरौ सति औपच्छन्दसकं स्यात् तत् कवीन्द्राणां हृद्यं मनोरमम्।

कंसं यो निर्जघान देवो तं जगतां स्थितिं दधानम् ॥

(२७) इति वैतालीयम्।

---

अथ पज्झटिका।

१। प्रतिपदयमकितषोड़शमात्रा
नवमगुरुत्वविभूषितगात्रा।
पज्झटिकापुनरत्र विवेकः
क्वापि न मध्यगुरुर्गण एकः॥ (२८)

तरलवतंसाश्लिष्टस्कन्ध-
श्चलतरपज्झटिकाकटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दः
कालियशिरसि ननर्त्त मुकुन्दः॥ (२९)

नवमगुरुत्वं व्यभिचरति च।
रणधरणीजितरजनिविहारीति॥ (३०)

---

(२७) उदाहरति आतन्वानमिति। यः देवः सुरारिकान्तासु सुराङ्गनासु औपच्छन्दसकम् आशयानुरूपं यादृच्छिकमित्यर्थः हृदो विनोदं चित्तसन्तोषम् आतन्वानं कुर्वाणं कंसं निर्जघान, जगतां स्थितिं दधानं तं देवं कृष्णं वन्दे प्रणमामि।

(२८) प्रतिपदं प्रतिपादमित्यर्थः यमकिता युग्मविच्छिन्नाः षोड़शमात्रा यस्यां तथोक्ता तथा नवममात्राया गुरुत्वेन विभूषितं रञ्जितं गात्रम् अवयवः यस्याः तथाभूता पज्झटिका नाम स्यात् अत्र पुनः विवेक एषः यत् क्वापि कुत्रापि मध्यगुरुः एकोऽपि गणो न स्यादिति शेषः।

(२९) उदाहरति तरलेति। तरलेन चञ्चलेन वतंसेन कर्णकुण्डलेन आश्लिष्टः स्पृष्टः स्कन्धः यस्य तादृशः तथा चलतरा अतिचञ्चला पज्झटिका क्षुद्रघण्टिका कटिबन्धे यस्य तथाभूतः मौलिषु धम्मिल्लेषु चपलानि शिखिनः मयूरस्य चन्द्रकवृन्दानि वर्हनिचयाः यस्य तथाविधः मुकुन्दः कृष्णः कालियस्य शिरसि ननर्त्त।

मात्रात्रयोदशकं यदि पूर्वं लघुकविरामि।
पश्चादेकादशकन्तु दोहड़िका द्विगुणेन॥ (३१)

प्राकृतभाषायां प्रचारः।

राईदोहड़िपठण सुणि हसिअ कारणगोआल।
विन्दावणघणकुञ्जचलिओ कमण रसालः॥

इति छन्दोमञ्जर्यां मात्रावृत्ताख्यः पञ्चमः स्तवकः।

---

## षष्ठः स्तवकः।

---

### अथ गद्यप्रकरणम्।

१। पद्यं गद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः।
प्रागुक्तलक्षणं पद्यं गद्यं सम्प्रति गद्यते॥ (१)

---

(३०) नवमगुरुत्वं व्यभिचरति च यथा रणधरणी जितरजनि विहारीति।

(३१) मात्रेति। पूर्वं प्रथमे पादे इत्यर्थः मात्रात्रयोदशकं लघुकविरामि अन्त्यलघु, पश्चात् द्वितीये पादे एकादशकम् एकादशमात्रा इत्यर्थः अत्रापि लघुकविरामीति योज्यं सा द्विगुणेन द्विरावृत्तेन दोहड़िका नाम।

---

(१) गद्यमिति। बुधाः पण्डिताः वाङ्मयं शास्त्रं पद्यं गद्यमिति द्विविधं प्राहुः। पद्यं प्राक् पूर्वम् उक्तं लक्षणं यस्य तथाभूतम्। सम्प्रति गद्यमुच्यते। पद्यं चतुष्पदीत्युक्तं प्राक् द्विपद्यादीनां वेदादिष्वेव प्रायशो दर्शनात् काव्यादावेव पादचतुष्टयत्वाभिधानाच्च वस्तुतस्तु छन्दो बद्धानां वाक्यानामेव पद्यत्वव्यवहारः तदुक्तं छन्दो नियमवद्वाक्यं पद्यमित्यभिधीयते। इति छन्दो बद्धपदं पद्यमित्यपि च।

२। अपादः पदसन्तानो गद्यं तत्तु त्रिधा मतम्।
चूर्णकोत्कलिकाप्रायं वृत्तगन्धि प्रभेदतः॥ (२)

३। अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः।
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत्॥ (३)

४ भवेदुत्कलिकाप्रायं समासाढ्यं दृढ़ाक्षरम्।
वृत्तैकदेशसम्बन्धाद् वृत्तगन्धि पुनः स्मृतम्॥ (४)

चूर्णकं यथा—

स हि त्रयाणामेव जगतां गतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गी मवनि मवलोक्य करुणार्द्रहृदयः तस्या भारमवतारयितुं रामकृष्णस्वरूपेणांशतो यदुवंशे

---

एतेन न्यूनाधिकपादात्मकगाथाया अपि पद्यत्वसिद्धिः। तच्च पञ्चधा, तथा चोक्तं छन्दो बद्धपदं पद्यं तेनैकेन च मुक्तकं द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते। कलापकं चतुर्भिः स्यात् पञ्चभिः कुलकं मतमिति पञ्चभिरिति न्यूनसंख्याव्यवच्छेदार्थम्। तेन पञ्चातिरिक्तसंख्यकैरपि कुलकं वेदितव्यम्। केचित्तु एकश्लोको मुक्तकं स्यात् द्वाभ्यां युगलकः स्मृतः। त्रिभिर्गुणवती प्रोक्ता चतुर्भिश्च प्रभद्रकम्। बाणावली पञ्चभिः स्यात् षड्भिश्च करहाटकः॥ इति।

(२) गद्यं तद्भेदांश्चाह अपाद इति। अपादः चरणानिबद्ध इत्यर्थः पदानां सुप्तिङन्तानां सन्तानः समूहः गद्यं, तत्तु त्रिधा मतं कथितं चूर्णकं १ उत्कलिकाप्रायं २ वृत्तगन्धि ३।

(३) चूर्णकं लक्षयति अकठोराक्षरमिति। अकठोराणि अकर्कशानि कोमलानीत्यर्थः अक्षराणि यत्र तादृशं स्वल्पः अनल्पः समासो यत्र तथाविधं वाक्यं चूर्णकं विदुः। तत्तु गद्यं वैदर्भरीतिस्थं वैदर्भरीत्या रचितमित्यर्थः वैदर्भीमाह दर्पणः। माधुर्य्यव्यञ्जकैर्वर्णैं रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते इति। हृद्यतरं अतिमनोहरं भवेत्।

(४) उत्कलिकाप्रायं वृत्तगन्धि च लक्षयति भवेदिति। समासाढ्यं समास-

अवततार। यस्तु प्रसङ्गेनापि स्मृतोऽभ्यर्चितो वा गृहीतनामा पुंसां संसारसागरपारमवलोकयति। (५)

उत्कलिकाप्रायं यथा—

प्रणिपातप्रवणसप्रधानाशेषसुरासुरादिवृन्दसौन्दर्य्यप्रकटकिरीटकोटिनिविष्टस्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्र! विक्रमोद्दामवामपादाङ्गुष्ठनखरशिखरखण्डितब्रह्माण्डविवरनिःसरच्छरदमृतकरकरप्रकरभासुरसुरवाहिनीप्रवाहपवित्रीकृतपिष्टपत्रितय! कैटभारे! क्रूरतरसंसारसागरनानाप्रकारावर्त्तविवर्त्तमानविग्रहं मा मनुगृहाण। (६)

वृत्तगन्धि यथा—

---

भूयिष्ठं दृढ़ाचरं कठोराचरयुक्तं गद्यम् उत्कलिकाप्रायं भवेत्। वृत्तैकदेशसम्बन्धात् छन्दोबद्धवाक्यैकादेशसत्त्वाद्धेतोरित्यर्थः वृत्तस्य पद्यस्य गन्धो विद्यतेऽत्रेति व्युत्पत्त्या वृत्तगन्धि स्मृतं कथितम्।

(५) चूर्णकमुदाहरति स हीति। भङ्गुराङ्गीम् अवनताङ्गीं चयीमुखीचिवर्णः अवनिं पृथ्वीम्। गृहीतनामा गृहीतं कीर्त्तितं लोकैरिति भावः नाम यस्य तथाभूतः। संसारसागरपारम् अवलोकयति संसारार्णवतरणाय कृपादृष्टिं वितरतीति यावत्।

(६) उत्कलिकाप्रायमुदाहरति प्रणिपातेति। प्रणिपातप्रवणानां प्रणामपरायणानां सप्रधानानां प्रधानसहितानां सुरासुरादिवृन्दानां देवदानवदैत्यादिनिचयानां सौन्दर्य्येण प्रकटाः समुज्ज्वला ये किरीटा तेषां कोटिषु उपरिभागेषु निविष्टाः निहिताः स्पष्टा दीप्यमाना मणयः रत्नानि तेषां मयूखच्छटाभिः किरणसमूहैः छुरितं रञ्जितं चरणनखानां चक्रं समूहः यस्य तथाभूतः तत्सम्बुद्धौ। विक्रमेण उद्दामस्य वामपादस्य अङ्गुष्ठनखस्य शिखरेण अग्रभागेन खण्डितं विदीर्णं यत् ब्रह्माण्डं तस्य विवरात् रन्ध्रात् निःसरन्ती शरदमृतकरप्रकरभासुरा शारदचन्द्रकिरणनिचयवत् भासमाना या सुरवाहिनी मन्दाकिनी तस्याः प्रवाहेण स्रोतसा पवित्रीकृतं पिष्ट-

जय जय जनार्दन! सुकृतिमनस्तड़ागविकस्वरचरणपद्म! पद्मपत्रनयन! पद्मापद्मिनीविनोदराजहंस! भास्वरयशः-पटलपरिपूरितभुवनकुहर! हरकमलासनादिवृन्दारकवृन्द-वन्दनीयपदारविन्दद्वन्द्व! द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिरा-विष्कृतनिरञ्जनज्योतिःस्वरूप! विश्वरूप! अनाथनाथ! जगन्नाथ! मां अनवधिभवदुःखव्याकुलं रक्ष रक्ष। (७)

८। व्यवहारोचितं प्रायो मया छन्दोऽत्र कीर्त्तितम्।
प्रस्तारादि पुनर्नोक्तं केवलं कौतुकं हि तत्॥॥ (८)

---

पवित्रयं भुवनत्रयं येन तथाभूतः तत्सम्बोधने। हे कैटभारे! कैटभासुरनिसूदन! क्रूरतरस्य अतिभीषणस्येत्यर्थः संसारसागरस्य नानाप्रकारैरावर्त्तैः घटनाभिरित्यर्थः विवर्त्तमानः व्यथमानः विग्रहः शरीरं यस्य तथाभूतं माम् अनुग्रहाण दयस्व।

(७) वृत्तगन्ध्युदाहरति जयेति। सुकृतिनां पुण्यवतां मनांस्येव तड़ागाः सरांसि, तेषु विकस्वरे चरणपद्मे यस्य तथाभूतः तत्सम्बुद्धौ सज्जनमनोनिवास इत्यर्थः। पद्मा लक्ष्मीरेव पद्मिनी कमलिनी तदाख्यकामिनी च तत्र विनोदे मनसः प्रीणने राजहंसः तत्सम्बोधने। राजहंसो यथा पद्मिनीं विनोदयति तथा त्वं लक्ष्मीं विनोदयसीति भावः। भास्वरेण विराजता यशसां पटलेन राशिना परिपूरितं व्याप्तं भुवनकुहरं जगदन्तरालं येन तथाभूतः तत्सम्बुद्धौ। हरकमलासनादिवृन्दारकाणां शिवविरिञ्चि-प्रभृतिदेवानां वृन्दैः गणैः वन्दनीयम् अर्चनीयं पदारविन्दद्वन्द्वं चरणकमलयुगलं यस्य तथाविधः तत्सम्बुद्धौ। द्वन्द्वनिर्मुक्तानां शीतोष्णादिद्वन्द्वयुक्तानभिभूतानामित्यर्थः योगीन्द्राणां महायोगरतानां परमहंसानामित्यर्थः हृदयमन्दिरेषु चित्तसद्मसु आविष्कृतं प्रकटितं निरञ्जनं निष्कलुषं ज्योतिःस्वरूपः तेजो रूपं येन तथाभूतः तत्सम्बुद्धौ। नास्ति अवधिः शेषो यस्य तादृशं यत् भवदुःखं संसारक्लेशः तेन व्याकुलं व्यथितं मां रक्ष रक्ष परित्राहि परित्राहि।

(८) उपसंहरति व्यवहार इति। अत्र ग्रन्थे मया व्यवहारोचितं छन्दः प्रायः प्राचुर्य्येण कीर्त्तितम्। प्रस्तारादि प्रस्तार्य्यन्ते लघुगुरुभेदात् विस्तार्य्यन्ते छन्दांसि

सर्गैः षोड़शभिः समुज्ज्वलपदैर्नव्यार्थभव्याशयैः
येनाकारि तदच्युतस्य चरितं काव्यं कविप्रीतिदम् ॥
कंसारिः शतकं दिनेशशतकद्वन्द्वञ्च तस्यास्त्वसौ ।
गङ्गादासकवेः कृतौ कुतुकिनां सच्छन्दसां मञ्जरी ॥

इति छन्दोमञ्जर्य्यां गद्यप्रकरणाख्यः नाम षष्ठः स्तवकः ।

समाप्तोयं ग्रन्थः ।

---

अनेनेति प्रस्तारः सदादि पुनः किन्तु न उक्तं हि यतः तत् प्रस्तारादिकथनं केवलं कौतुकम् औत्सुक्यमथं तादृशप्रयासे प्रयोजनाभावादिति भावः ।

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागर-भट्टाचार्य्येण विरचिता छन्दोमञ्जरीव्याख्या समाप्ता ।

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ आशुबोध व्याकरणम् २
२ अष्टाम् पाणिनीयम् ॥०
३ उणादिसूत्रम् सटीक २
४ कविकल्पद्रुम (धातुपाः) ।०
५ कलापव्याकरणं वा कातन्त्र २
६ धातुरूपादर्शः १॥०
७ परिभाषेन्दुशेखर सटीक १
८ मुग्धबोधव्याकरणम् सटीक १॥०
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।०
१० वैयाकरणभूषणसार ॥०
११ लघुकौमुदीव्याकरणम् ॥०
१२ लिङ्गानुशासनं सटीक ।०
१३ शब्दरूपादर्शः ॥०
१४ शब्दार्थरत्नम् ॥०
१५ सारस्वतव्याकरण सटीक पूर्वार्द्धम् १
१६ सारस्वतव्याकरणं सटीक उत्तरार्द्धं २
१७ सिद्धान्तकौमुदी सरलासहित १०
१८ ऋतुसंहार काव्य सटीक ।/
१९ काव्यसंग्रह मूलमात्र ५
२० काव्यसंग्रह सटीक प्रथमभागः ३
२१ काव्यसंग्रह सटीक द्वितीयभागः २
२२ काव्यसंग्रह सटीक तृतीयभागः २
२३ किरातार्जुनीयकाव्य सटीक १॥०
२४ कुमारसम्भवकाव्यपूर्वखण्ड सटीक॥०
२५ कुमारसम्भवकाव्य उत्तरखण्डसटीक॥
२६ गीतगोविन्द काव्य सटीक ॥०
२७ चन्द्रशेखरचम्पू काव्य १
२८ नलोदय काव्य सटीक ।/
२९ नैषधचरितम् काव्य सम्पूर्ण सटीक५
३० नैषधकाव्य नवमसर्गपर्य्यन्त सटीक२॥
३१ पुष्पबाणविलास काव्य सटीक ॥०
३२ विद्वन्मोदतरङ्गिणी (चम्पू काव्य) ॥०
३३ भट्टिकाव्य टीकाद्वयसहित २
३४ भामिनीविलासकाव्य सटीक ॥०
३५ भामिनीविलास संक्षिप्तटीकासह ।७
३६ चम्पूरामायणम् सटीक १
३७ (चम्पूरामायणम्) भोजचम्पू ॥०
३८ शतकावलिः ॥०
३९ माधवचम्पू काव्य ।०
४० मेघदूत मल्लिनाथकृत टीकासहित।/
४१ मेघदूत सटीक सुलभमूल्यकम् /०
४२ रघुवंश काव्य सटीक १॥०
४३ रघुवंश मूलमात्र ७,८,१२ सर्गाः/०
४४ रामप्रशस्ति सटीक /
४५ शिशुपालवधकाव्य सटीक (माघ) २
४६ गद्यकथासरित्सागर सम्पूर्ण ६
४७ कादम्बरी विस्तृतव्याख्यासहिता ३
४८ दशकुमारचरितगद्यकाव्य सटीक १
४९ द्वात्रिंशत्पुत्तलिकासिंहासन १
५० पञ्चतन्त्रम् विष्णुशर्मकृत सटीक १
५१ बहुविवाहवाद ।०
५२ वासवदत्ता गद्यकाव्य सटीक १
५३ वेतालपञ्चविंशतिः (सरलगद्य) ॥०
५४ शङ्करविजय १॥०
५५ भोजप्रबन्ध सरल गद्य ॥०
५६ हर्षचरित सटीक बाणभट्टकृत २॥०
५७ हर्षचरितबाणभट्टकृतगद्य १
५८ संस्कृतशिक्षामञ्जरी प्रथमभागः /
६९ संस्कृतशिक्षामञ्जरी द्वितीयभागः ।०
६० संस्कृतशिक्षामञ्जरी तृतीयभागः ॥०
६१ संस्कृतशिक्षामञ्जरी चतुर्थभागः ।०
६२ हितोपदेश सटीक ॥०
६३ अमरकोष ॥०
६४ वाचस्पत्यम् (बृहदभिधान) १००
६५ मेदिनीकोष १
६६ शब्दस्तोममहानिधिः ८
६७ अनर्घराघवनाटक सटीक [मुरारि]२
६८ अनर्घराघवनाटक मूलमात्र १

